शैवदेवेच जुहुयाद्विशेषोऽन्यत्र वै पुनः।
अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये॥
जुहुयात् त्र्यम्बकं देवं विल्वपत्रैस्तिलैस्तथा।
विनायकाय होतव्या तथा घृतस्य चाहुतिः॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्सन्ततन्नुतम्।
गणानान्त्विति मन्त्रेण स्वाहाकारान्तपादतः॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाहुतीः।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृते॥
प्रणवेन च गायत्र्या केचिज्जुह्वति सद्द्विजाः।
एतौ वै सर्वदैवत्यौ एतत्परन्न किञ्चन॥
एताभ्यां जुहुते नैव सर्वेभ्योऽपि हुतम्भवेत्।
जुहुयात्सर्पिषायुक्तं सव्येन पयसाथ वा॥
क्षीरेन च विकारेण तिलतैलेन वा पुनः।
संप्रोक्ष्य पयसा वापि अन्नन्तु मन्नुयादपि॥
अन्नेष्वन्यापि गोधूमाः शालयो हवनीयकाः।
हविस्तु हविरभ्युक्तमहविस्तु हविर्यतः॥
अभ्यक्तमेव होतव्यमतोऽक्तं विवर्जयेत्।
दरिद्राश्चिन्तितामेके कृत्वान्नहवने विदुः॥
जठराग्नेः स्वयश्चैके कृत्वासनमिहोच्यते।
ओँकारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा॥
जुहुयादग्निको विप्रो गृहमेधीहि नित्यशः।
वलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः॥
हुत्वाथ कृष्णवर्त्मानं कृताञ्जलि प्रसादयेत्।
त्वमग्ने! द्युतिरेतेन मन्त्रेण भक्तिमान् द्विजः॥

आब्रह्ममिति मन्त्रन्तु जपेद्दै सर्वकामिकम् ।
अहाव्यग्न इति ह्येतं कृत्वञ्च प्रयतो जपेत् ॥
अन्यद्दौताशनं मन्त्रं जपित्वा च समापयेत् ।
सर्वशान्तिककृत्यर्थं तथाग्निर्देवतेति च ॥
ज्ञानं धनमरोगित्वं गतिमिच्छंस्तथा द्विजः ।
शम्भुमग्निं रविं विष्णु मर्चयेद्भक्तितः क्रमात् ॥
अजानन् यो द्विजोनित्य मकृत्वा निस्तृतं हविः ।
पितृदेवमनुष्याणा मणत्युक्तः प्रयात्यधः ॥
शाकञ्चापि तृणं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्तः सोऽत्रैव सुखमश्नुते ॥
स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रपयापि यच्च ।
तथातिरिक्तं मम तत् क्षमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रणोदाय सर्वकामाय वै द्विजः ।
द्विजन्मनां हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीवृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्यं संप्रवक्ष्यामि चातुर्वर्ण्यफलप्रदम् ।
चतुर्वर्णातिथिः प्रोक्तः कालप्राप्तो बहुमतः ॥
अदृष्टोऽदृष्टगोत्रादिरज्ञाताचारविद्यकः ।
सन्ध्यामात्रकृताचारसज्ञैः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाध्वश्रमश्रान्तः प्राणत्राणान्नयाचकः ।
गृहिणो वैश्वदेवान्ते गृहद्वारमुपागतः ॥
विष्णुरूपोऽतिथिः सोऽयं मत्तारार्थमिहागतः ।
इति मत्वा च भक्त्या च दद्याद्भोजनादतम् ॥

त्वं शृणु तेन समायातः सर्वदेवमयो विधिः।
निर्दह्य सर्वपापानि समाचायुः प्रयास्यति॥
ब्राह्मणैः सह भोक्तव्यो भक्त्या प्रक्षाल्य पादयम्।
आसनार्घादिकं दत्त्वा दत्त्वा स्रक्चन्दनादिकम्॥
योगिनो विविधैर्वेशैर्भ्रमन्ति धरणीतले।
नराणामुपकाराय ते चाज्ञातस्वरूपिणः॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विजः।
श्राद्धक्रियाफलं हन्ति तत्र चापूजितोऽतिथिः॥
तस्मादपूर्वमेवात्र पूजयेदागतोऽतिथिः।
कदाचित्कश्चिदागच्छेत्तारयेद्यस्तु पूर्वजान्॥
यतिर्वा ह्यग्निहोत्रीच तथापि मखकृद्द्विजः।
सदैतेऽतिथयः प्रोक्ता अपूर्वश्च दिने दिने॥
अतिथेऽमरदेहस्त्वं मत्तारार्थमिहागतः।
संसारपङ्कलग्नं मा मुद्धरस्वाघनाशने॥
नैक ग्रामे वसन्यो हि मुनीशैरुच्यतेऽतिथिः।
अन्यत्र दृष्टपूर्वोऽपि नासावतिथिरुच्यते॥
क्षत्रियो यदि वा गच्छेदतिथिस्तस्य वेश्मनि।
भक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत्॥
वैश्यो वा यदिवा शूद्रो विप्रगृहं समाव्रजेत्।
तौ भृत्यैः सह भोक्तव्यौ इति पाराशरोऽब्रवीत्॥
क्लीबो वा यदि वा काणः कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते प्रष्टव्यः सर्वदेवता॥
दर्शणेनापि वैश्येन तथा च वृषलेन च।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम्॥

योऽतिथीन् पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकश्चैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे स्वर्ग्येन हर्षेन च मूर्ति तिष्ठन्
तस्मात्सदा हुत्वमराङ्गनाभिस्तस्यातिथिः केन समत्वमस्ति ।
इति श्रीवृहत्पराशरे अतिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
विवोढव्यं द्विजास्तद्वै मक्षेपेण पृथक् पृथक् ॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजानां रक्षणं दान मक्षीणां निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥
यजनाध्ययने दानं पाशुपाल्यस्तथा कृषी ।
वाणिज्यञ्च कुसीदञ्च कर्मषट्कं प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीनां वैश्य आजीवनन्तदा ।
एष धर्मः स्मृतः शूद्रो वाणिज्येन च जीवनम् ॥
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्षणम् ।
भिन्नवृत्तिर्यथा न स्यात् कुर्य्याद्विप्रस्तथा च तत् ॥
कुर्वन्न्यानि कर्माणि हत्या वा सत्रियस्य च ।
तदभावे द्विजो जीवेद्विप्रवृत्तिं विवर्जयेत् ॥
क्षत्रिये प्रजापालत्वं शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ! ॥
पुष्पंपुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारामे प्रजासु स्यात्तथा नृपः ॥

लोहकर्म रथानाञ्च गवाञ्च प्रतिपालनम्।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता॥
शूद्रस्य द्विजशुश्रूषा परोधर्मः प्रकीर्तितः।
अन्यथा कुरुते यस्तु तद्भवेत्तस्य निष्फलम्॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः।
न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्वस्य विक्रयाम्॥
विक्रयं मद्यमांसाना मभक्ष्यस्य च भक्षणम्।
अगम्यागामिता चौर्य्यं शूद्रे स्युः पापहेतवः॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम्॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां द्वितीयोऽध्यायः॥

---

## तृतीयोऽध्यायः।

अतःपरं गृहस्थस्य कर्माचारं कलौ युगे।
धर्मसाधारणं शास्त्राच्चातुर्वर्ण्यक्रमागतम्॥
युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम्।
षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत्॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम्।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्ड विवर्जितम्।
अधृष्टं सबलप्राण मनड्वाहं न वाहयेत्॥
वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत्।

कुगवैर्न कृषिं कुर्य्यात्सर्वथा धेनुसंग्रहः ॥
बन्धनं पालनं रक्षां द्विजः कुर्य्याद्दृढं गवाम् ।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम् ॥
न दूरे तास्तु मोक्तव्या श्चरणाय कदाचन ।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभायनाः ॥
प्रातरेवहि दोग्धव्या दुग्धाः सायं तथा दृढ़ी ।
दोग्धुर्विपर्य्ययेणैव वर्द्धन्ते ताः कदाचन ॥
अनाद्यृत्यतृणान्यक्ता स्रवन्त्यनुदिनं पयः ।
तुष्टिकृद्देवतादीनां पूज्या गावः कथन्न ताः ॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः ।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु ॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिता
सर्वं देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः ॥
हरति स्पर्शनात्पापं पयसा पोषयन्ति याः ।
प्रापयन्ति दिवं दत्ताः पुज्या गावः कथन्न ताः ॥
यच्छफाहतभूमेस्तु उद्यताः पांशुसंस्पृशः ।
प्रीणयेत् पुरुषस्येनो वन्द्या गावः कथन्न ताः ॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम् ।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत् ॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी ।
प्रसूता च दशाहार्वाग्दोग्धा चेन्नरकं व्रजेत् ॥
दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः ।
सा साधुभिर्न दोग्धव्यावर्षिभिः सुखमीप्सुभिः ॥

कुलान्ते पुष्पिता गावः कुलान्ते वत्सवत्सिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः॥
एकत्र पृथिवी सर्वा सशैलवनकानना।
तथा गौ र्ज्यायसी साक्षादेकत्रोभयतोऽमुखी॥
यथोक्तविधिनायैता वर्णैः पाल्यास्तु पूजिताः।
पालयेत् पूजयन्नेताः सप्रेमेह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखा॥
गोवृषा वाजिशालायां सुतीक्ष्णं लौहदात्रकम्।
स्थाप्यन्तु सर्वदा तस्यां गवि लुप्तविमोक्षणात्॥
गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा।
ताड़यन्ति च ये पापा येचाकर्षन्ति ता नराः॥
नरके पच्यन्तेऽङ्गानि श्वासेनच प्रपीड़िताः।
स पशुचर्म दण्डेन मृदु तासां निवर्त्तयेत्॥
गच्छ गच्छेति तां ब्रूयान्मा माभैरिति वारयेत्।
संस्पृशन् गां नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम्॥
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्यात्तु वाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः।
पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च॥
गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोड़शीम्।
कुतस्तेषां हि पापानि येषां गृह मलङ्कृतम्॥
सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्॥

तिष्ठन्त्येकत्र मन्त्राणि हरिरेकत्र तिष्ठति।
गोभिर्यज्ञाः प्रवर्त्तन्ते गोभिर्देवाः प्रतिष्ठिताः॥
गोभिर्वेदाः समुत्तीर्णाः स षडङ्गपदः क्रमात्।
सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः॥
वसन्ति हृदये नित्यं तासां मध्ये वसन्ति ये।
ते पुण्यपुरुषाः क्षोण्यां नाकेऽपि दुर्लभाश्च ये॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः।
शृङ्गाग्रे शङ्करं विद्यात्त्रयो देवाः प्रतिष्ठिताः॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च।
सर्वे देवाः स्थिता देहे सर्वदेवमया हि गौः॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः।
कम्बलाश्वतरौ नागौ तत्कर्णौ यौ व्यवस्थितौ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः॥
सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम्॥
कालिन्दी गोमये तस्या अपरा देवता तथा।
अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः॥
उदरे गार्हपत्योऽग्निर्हृदये दक्षिण तथा।
मुखे चाहवनीयस्तु चावसथ्यौ च कुक्षिषु॥
एवं यो वर्त्तते गोषु ताडनं क्रोधवर्जितः।
महतीं श्रियमाप्नोति स्वर्गलोके महीयते॥
कुल्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत्।
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्।
शिवस्यायतनं दत्त्वा दशान्तेन तु विप्रकम्॥
उक्ता गौ वेधसा सृष्टा तस्य ह्युत्पादनाय च।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते॥
यश्चैतान् पालयेत् यत्नात्सर्वयेच्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्य मुक्तं पूर्वमनीषिभिः।
उक्षणोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वम नडुहा चराचरम्।
वृष एष्यवती रक्ष्या पालनीयस्तु सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणा क्षितितारिताः।
त्रैलोक्यं धारणायालमन्नानाश्च प्रसूयते॥
अनादेयानि घासानि विध्वंसन्ति सकामतः।
भ्रमिता भूतलं दूरमुक्षाणङ्गो न पूजयेत्॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च।
आनयन्ति दवीयस्य मुक्षणोर्वा कोऽधिको भवि॥
स्कन्धेन दूराच्च वहन्तिभारं माषादि किञ्चिद्यनपत्यरत।
स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति॥
पुण्यास्तु गावो वसुधातले मां विभ्रत्यमुङ्गोष्ठगर्भभारम्।
भारःपृथिव्या दशताड़िताया एकस्य चाणो स्यपि राधुवाचः॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
माहेत्म्यपीयं धरणीं समाना तस्माद्वृषात् पूजितमस्ति चान्यः॥
उत्पाद्य शस्यानि तृणाञ्चरन्ति तदेव भूयः सकलं वहन्ति।
न भारखिन्नाः प्रवदन्ति किञ्चिदशोट्टषाद्धार्यति जीवलोकः॥

तृतीयेऽह्नि चतुर्थे वा यदेवोष्णा हलोभवेत् ।
तदा न सातु भेतव्या नैव प्रागदुर्बलस्य च ॥
नाम.वेश्मकीलस्तु खादिरं वाथ सैंशिपम् ।
द्वादशाङ्गुल कङ्कार्क्षन्तरूपैस्त्रीणि समेष वा ॥
शाला द्विजेन्द्रा वृषगोहयानां ता याम्यदिग्द्वारवतीं विदध्यात्।
सौम्या ककुप्द्वारवतीं सुशोभास्तेषां शमिच्छन् धृतमात्मनश्च॥
गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः ।
याम्या मुखा दिङ्मुखमुत्तरादिङ्मुखाशका स्ते खलु बन्धनीयाः॥
शालाप्रवेशे वृषगोपशूनां राजापि यत्नाद्धयकुञ्जराणाम्।
होमञ्च सप्तार्चिषि शास्त्रदृष्टं कुर्य्याद्द्विजघ्नो द्विजपूजनञ्च॥
लाङ्गलं यत्प्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः ।
हलीशायास्तथामानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथाचाष्टा वङ्गुलानि कुष्ठः स्मृतः ।
अयाद्दोमङ्गलैर्भोज्यो हलीशा वेधतश्च यः ॥
षोड़शैव तु तस्याधः षड्विंशति तथोपरि ।
वेधस्तथाच कर्त्तव्यः प्रमाणेन षड़ङ्गुलः ॥
अष्टाङ्गुलमुरस्तस्य वेधादूर्द्ध्वं प्रकल्पयेत् ।
ग्रीवा दशाङ्गुला चोर्द्ध्वं हस्तग्राही ततः स्मृतः ॥
अङ्गुलैश्चाष्टभिस्तन् स्याद्वेधः स्यात्प्रतिहारकः ।
तस्याधस्ताच्चत्वारि स वेधश्चतुरङ्गुलः ॥
सार्वतश्चैः शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् ।
पञ्चाङ्गुलमुरस्तस्याः शिरश्चेति विभाजनम् ॥
पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् ।
अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता ।

बन्धाङ्घ्रिः प्रतीहारी षड्‌विंशदङ्गुला भवेत्।
सुतीक्ष्णो लोहपाल्यस्य सुक्ताद्यामाद्विदारकात्॥
नगरं क्षीरवृक्षस्य न बिल्वपिचुमर्द्दयोः।
तूल्यादीनां हि कुर्व्वीयं न नन्दति चिरं गृही॥
प्राञ्जला समङ्गला तु हलीषा विदुषा मता।
तस्य वेधः सवर्णायाः कार्य्यौ नववितस्तिभिः॥
ब्रह्माक्षयोर्न तत्कुर्य्यात् कीर्तिघ्नौ तौ प्रकीर्त्तितौ।
प्रमादतस्तु ताः कुर्वन् समस्यो नश्यते गृही॥
नीचोच्चरूपमानेन तज्ज्ञास्तां प्रवदन्ति हि।
चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत्॥
शेषम्रक्षाः कदम्बस्य शालाधन्वतमस्य च।
तस्या वेधाद्गहिः कार्य्या दशाङ्गुलप्रमाणिका॥
तन्माने च प्रमाणीच तदन्तरदशाङ्गुलम्।
प्रतोदविषमग्रन्थि वैणवश्च चतुः करः॥
तदग्रे तु प्रकर्त्तव्या यवाकारान्तु लोहवत्॥
हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः।
कुर्य्यादनड्‌हा दैन्याद्दैन्यां नरकं व्रजेत्॥
यथा भीष्टं तथा शोभं वाहकस्य प्रमाणतः।
भूमेश्च कर्षणायालं तज्ज्ञाः सर्ववदन्ति हि॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा।
श्रेष्ठनक्षत्र संयुक्ते पुण्येऽह्नि तद्विधीयते॥
यत्र दिने तु बध्येत तत्र कार्य्यं विजानता॥
यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत्।
तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्विधीयते॥

मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम्॥
प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत्।
इन्द्राय च तथाग्निभ्यां मरुद्भ्यश्च तथा द्विजः॥
कुर्य्याद्बलिं हुतिं विद्वान् उदलश्यश्वयाय च।
तथा कुमार्य्यै शीतायै अनुमत्यै तथा बलिम्॥
नमः स्वाहेति मन्त्रेण सबालन्वात्मनः शुभम्॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा।
दद्याद्बलिं वृषाणाञ्च तथाज्यग्रासनं तथा॥
संघृष्य शिरफालाग्रे हेम्ना वा राजतेन वा।
प्रलेप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम्॥
अग्न्योर्णौ मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम्
पुष्पं लाङ्गलकल्याण कल्याणाय नमोऽस्विति॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत्।
सीतां युञ्जत इत्याद्यैर्मन्त्रैःसीरं प्रवाहयेत्।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्पदैः॥
सीतां पूज्य वशो भर्त्तारक्त वस्त्रविशाणकौ।
सप्त धान्यानि चादाय प्राच्य पूर्वामुखा हली॥
तानि दद्यौक्षणः क्षेत्रे किरन् भूमौ कृषद्विजः।
न यवैर्न तिलैर्हीन द्विजः कुर्य्याच्च कर्षणम्॥
तद्विहीनन्तु कुर्वाण न प्रशंसन्ति देवताः।
तिलमात्रच्युतं तोय दक्षिणस्याम्पतेद्दिशि॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः।
विक्रीणीते तिलान् यस्तु तर्पयेत्सर्पि देवताः॥

विमुच्य पितरस्तन्तु प्रयान्तीव तिलैः सह।
यथाजलं यवस्तम्बपत्रेभ्यो भूतले पतत्॥
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः।
देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते॥
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत्।
शालीन् भूशणकार्पासं वार्त्ताकुप्रभृतीनि च॥
वापयेत्सर्वबीजानि सर्वत्रापी न सीदति।
चन्द्रक्षये यतिर्विप्रो यो युनक्ति वृषान् क्वचित्॥
तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम्।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु पराशनम्॥
भोक्तुर्मासार्जितं पुण्यं भवेदशन मस्य तत्।
चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम्॥
स रेतोभोजिनस्तस्य पञ्चमासं पितरो हिताः।
चन्द्रक्षये च यः कुर्य्यान्नरस्तरुनिकृन्तनम्॥
तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः।
वनस्पतिगते सोमे योऽध्वान व्रजेन्नरः॥
प्रभ्रष्टद्विजकर्माणं न त्यजन्त्यमरादयः।
वासांसि दुःप्रणाशाय रजकस्था मतिः क्षिपेत्॥
पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत्।
सोमक्षये द्विजो याति तत्कायस्तु कृताशनम्॥
तदेव पितृशापाग्निदग्धो नरक माविशेत्।
अष्टमीं कामभोगेन षष्ठीं तैलोपभोगिना॥
कुट्टल्य दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम्।

चन्द्राप्रतीताः पुरुषास्तु दैवा दद्यादपत्या यदि दन्तकाष्ठम्
नराधिराजः सहितस्तु तेन घातः क्षतः स्यात्पितृदेवतानाम्
तत्राभ्यज्य विषाणानि गावश्चैव वृषास्तथा ।
चरणाय विसृज्यन्ते आगतानिग्नि भोजयेत् ॥
य उत्पाद्येह शस्यानि सर्वाणि तृणचारिणः ।
जगत्सर्वं धृतं यैस्तु पूज्यन्ते किन्न ते वृषाः ॥
येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत् ।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किन्न ते वृषाः ॥
पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि ।
स याति नरकं घोरं यो वाह यत्यपालयत् ॥
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः ।
वाहनीयो हि शूद्रेण वाहयन् नरमाप्नुयात् ॥
वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः ।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात् ॥
अन्नार्थ मेतानुत्राणाः ससर्ज परमेश्वरः ।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम् ॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः ।
गृह्णाति चाम्भसां सूर्यो रसानन्नाय रश्मिभिः ॥
अन्नं प्राणो बलं चान्न मन्नाज्जीवित मुच्यते ।
अन्नं सर्वस्य चाधारः सर्व मन्ने प्रतिष्ठितम् ॥
सुरादीनां हि सर्वेषा मन्नं वीजं परं स्थितम् ।
तस्मादन्नात्परं तत्वं न भूतं न भविष्यति ॥
द्यौः पुमान्धरणी नारी सम्भोगोऽन्दिवसुतम् ।
वसुधात्री तोयसंयोगादन्नादीनां हि सम्भवः ॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम् ।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः ॥
सर्वस्य बीज मापो वै सर्वं मद्भिः समाहृतम् ।
अद्य आप्यायना ह्यापः आपो ज्येष्ठतरा ह्यतः ॥
किञ्चित्कालं विनाऽन्नाद्यै र्जीवन्ति मनुजादयः ।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम् ॥
दत्तानि चाद्भिरेतस्यां किं न दत्तं चितौ भवेत् ।
तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह ॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः ।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम् ॥
सीते ! सौम्ये ! कुमारि ! त्व देवि ! देवार्चिते ! श्रिये ।
सत्कृताहि यथासिद्धा तथा मे सिद्धिदा भव ॥
सक्तत् सूत्रं विना नाम्ना सीतयाः स्थापनं विना ।
विनाभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः ॥
वापने नवने चेते खले गन्त्रीप्रवाहणे ।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने ॥
देवतायतनोद्यानंनिपातस्थानगो व्रजन् ।
सीमा श्मशानभूमिञ्च वृक्षच्छाया चितिं तथा ॥
भूमिं निखातयूपाञ्च शयनस्थानमेव च ।
अन्यामपि हि चावाद्यां न कृषन् कृषिकृत् हराम् ॥
नोषरां वाहयेद्भूमिं वर्चाश्मककरीष्टताम् ।
वाहयन्नाप्रमत्तश्च न नदीपुलिनं तथा ॥
यद्यसौ वाहयेल्लोभात्देशाद्दापि हि मानवः ।
क्षीयतेऽसौ चिरात्पापात् सपुत्रपशुबान्धवः ॥

नरकं घोरतामिस्रं पापीयान्याति चैनसः ॥
योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम् ।
स भूमिस्थेन पापेन ह्यनन्तनरकं वसेत् ॥
न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा ।
वाहयेन्नपथे क्षेत्रं वाहयन्दुःखभाग्भवेत् ।
क्षेत्रेष्वेव वृतिं कुर्य्यात् स दृष्टो नावलोकयेत् ॥
न लङ्घयेत्पशूनासौ नाभीयाद्याश्च शूकरः ।
बन्धश्च यत्नतः कार्य्यो मृगयुत्रासनाय च ॥
यत्राप्युपद्रवं राजा तस्करादिसमुद्भवम् ।
संरक्षेत्सर्वतो यत्नाद्यस्मात् षड्भागात्यसौ करात् ॥
कृषिकृन्मानवस्त्वेवं मत्वा धर्मं कृषे ध्रुवम् ।
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम् ॥
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम् ।
वाहयेत्तु जलाभ्यर्णां अपुष्टोऽसेकसम्भवैः ॥
शारदः सुसुकैः स्थानं कम्वादि वापयेद्धली ।
सर्वाभ्रकार्पासं तद्वदत्र तु हैमतम् ॥
वसन्तग्रीष्मकालीय मप्यूस्निग्धेषु तद्विदः ।
केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः ॥
वृन्ताकशाकमूलानि कन्दानि च जलान्तिके ।
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान् ॥
गोधूमांश्च मसूरांश्च खल्वान् खलकुलन्तथा ।
समस्निग्धेषु चान्यानि भूमिजीवान् विजानता ॥
तिला बहुविधा वोप्या अतसीशणमेव च ।
मृद्वम्बु यो जगत्सर्वं वापयेत्कृषिकृन्नरः ॥

सम्यक्श्चेच्चरतः सर्वान् गोवृषादीन् स्वयङ्कृषी।
चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्॥
प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्।
तृतीये विक्रयं वक्रं चतुर्थं राजसेवनम्॥
नखैर्विलिखने यः स्यात् ब्रूयुर्दोषं मनीषिणः।
तस्याः सीरविदारेण किन्न पापं चिरंभवेत्॥
तृणैकच्छेदमात्रेण प्रोच्यते चयमायुषः।
असङ्ख्यकन्दनिर्वाणादसङ्ख्यातम्भवेद्यम्॥
यद्दुषं मत्स्यबधानां तथा सङ्कर्षणामपि।
ब्रह्मः कुक्कुटिकानाञ्च तद्दिने कृषिजीविनाम्॥
बधकानाञ्च यत्पापं यत्पाप खगयोरपि।
कदर्य्याणाञ्च यत्पापं यत्पापं कृषिजीविनाम्॥
वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्।
तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः।
द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा॥
धान्यभागः प्रदातव्यो देहिनः चेत्रिणो ध्रुवम्।
अप्रयच्छन्नतभूमौ च विशाम्बिच्चेत्रभुग्भवेत्॥
एकैकांशापकर्ष स्याद्यावद्दशमसप्तमौ।
ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥
स त भागः प्रदातव्यो यतिस्ते कृषिभागिनौ।
व्यूढौ त्व मध्यमात्रायां देयोंऽशः स्याच्चतुर्दशः॥
एकैकांशाय चर्षस्तु यावद्दशमसप्तमौ।
ब्राह्मणस्तु कृषिं कुर्वन्नाशयेद्विच्छया धराम्।
न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्य्यतः।

ब्रह्मा वै ब्राह्मणानां स्वात्ममुखसृजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्याशनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः ॥
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्
ग्रामेशस्य नृपस्यापि किञ्चिन्तमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छुद्धिकारणम् ॥
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वत्र कृषिकृन्नरः ॥
कुर्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारण्यात्स देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्यात् कृषीवलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकस्तमवाप्नुयात् ।
चतुर्दिक्षु खले कुर्यात्प्राच्यामतिघनावृतिम् ॥
सैकद्वारापिधानञ्च पिदध्याच्चैव सर्वतः ।
खलाद्वार्गारणास्तून विशतस्तु निवारयेत् ॥
श्वशूकरसृगालादिकाकोलूककपोतवान् ।
निमन्त्र्य प्रोक्षणं कुर्यात् दानीयाभ्युक्षणाम्बुभिः
रक्षा च भस्मना कुर्याज्जलधाराभिरुक्षणम् ।

त्रिसन्ध्यं मर्पयेत्सीतां पराशरर्षिं स्मरन्।
प्रेतभूतादिनामानि न वदेत्तु तदग्रतः॥
सूतिकाग्टहवच्चात्र कर्त्तव्यन्तत्र रक्षणम्।
हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि॥
प्रयत्नादिव पूर्वाह्णे नापराह्णे न सन्ध्ययोः।
धन्योऽन्नामं सदा कुर्यात्सीतापूजनपूर्वकम्॥
यजेत खलभिक्षाभिः कलेरोहिण्यएव हि।
भक्त्या सर्वं प्रदत्तं हि तत्सममक्षिकात्ययम्॥
खलयज्ञा पवित्रैषा ब्रह्मणा निर्मिता पुरा।
भागधेयमयां कृत्वा तां ग्टह्णन्तीह मामिकाम्॥
शतक्रत्वादयो वेगः पितरः सोमपादयः।
सनकादिमनुष्यांश्च येषान्ये दक्षिणाशनः॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं फली।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः॥
दीनानामप्यनाथानां कुष्ठीनां कुशरीरिणाम्।
क्लीवान्धवधिरादीनां सर्वेषामपि दीयते॥
वर्णानां पतितानाञ्च श्वदृग्भूतानि तर्पयेत्।
चाण्डालानांच पाकानां प्रीत्यात्युत्तावचादरत्॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः।
सोकग्यः सीरिभिः सर्वै वर्णिभिर्ग्टहमेधिभिः॥
दत्वात्वष्टतया वाचा क्रमेणाथ विसर्जयेत्।
ततृहत्वा स्वग्टहं गच्छेच्छाद्दमभ्युदयं श्रयेत्॥

शरद्वै मन्त्रसन्तनवाब्दैः श्राद्धमाचरेत्।
नो हुत्वानन्तरश्नीयादश्नन्तं तद्वयमश्नुते॥
कृषानुत्पाद्य धान्यानि खलयज्ञं समाप्य च।
सर्वरत्नैर्हरौ युक्त इहामुत्र सुखी भवेत्॥
कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः।
न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति॥
चवस्त्वं निरन्नत्वं कृषितो नैव जायते।
अनातिथ्यञ्च दुःखत्वं गोमतो न कदाचन॥
निर्धनत्वममभ्यत्वं विद्यायुक्तस्य कर्हिचित्।
अख्यानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित्॥
वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये।
लाभस्यासंप्रदानञ्च सर्वेषां शुद्धिकृद्भवेत्॥
प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम्।
कृषितो विंशतिश्चैव ददन्नास्ति पातकम्॥
राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम्।
त्रयस्त्रिंशच्च विप्राणां कृषिकर्मा न लिप्यते॥

कृष्या च चोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखान्विधाय।
मुक्तो गृहस्थोऽपि पराशरप्राक्
तस्यामयः कश्चिदवादिदोषाः॥

देवा मनुष्याः पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च।
गावो द्विजेन्द्राः सह सर्वसत्त्वैः कृष्यं न तृप्तानि मनाक् ध्रुवेति
यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापेन स भूभवेन।
सीरेन तस्यानि विदारितापि स्याद्भूतधात्री वरदानदात्री॥

षट् कर्माणि क्षणं येतु कुर्युर्स्नानविधिं द्विजा: ।
ते सुरादिवरप्राप्ता: स्वर्गलोकमवाप्नुयु: ॥
षट्कर्मभि: क्षणि: प्रोक्तो द्विजानां गृहमेधिनाम् ।
गृहस्थ गृहिणीमाङ्गस्तद्विवाहमथोच्यते ॥
इति श्रीब्रह्मण्यारायणीये धर्मशास्त्रे सुव्रतप्रणीतायां क्षात्रकर्मनीतायज्ञोपवर्णनं नाम तृतीयोऽध्याय:॥

---

## चतुर्थोऽध्याय: ।

स्वयञ्च वाहयेत् चेतै र्धान्यैश्च स्वयमर्जितै: ।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यश: ॥
अष्टौ विवाहा नारीणां संस्काराय प्रकीर्तिता: ।
ब्रह्मादिक क्रमेणैव सम्प्रवक्ष्याम्यत: पृथक् ॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ।
कन्यालङ्कृत्य दीयेत विवाहो वेधस: स तु ॥
रेतो मज्जति यस्याप्सु मूत्रञ्च ह्रादिकेऽनिलम् ।
पुमान् स्यात् लक्षणैरेतै र्विपरीतैश्च षण्डक: ॥
ये यज्ञे वर्त्तमाने तु ऋत्विज: कर्म कुर्वते ।
कन्यालङ्कृत्य दीयेत विवाह: स तु दैवक: ॥
वराय गुणयुक्ताय विदुषे सदृशाय च ।
कन्या गोद्वयमादाय दीयेतार्ष: स उच्यते ॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ ।
स्यातामिति च यत्रोक्तां दानं कार्यं विधिस्त्वयम् ॥
एतावद्देहि मे द्रव्य मित्युक्त्वा प्राक् प्रदाय च ।

यत्र कन्यां प्रदीयेत स दैवत्यविधिः स्मृतः ॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः ।
तयोस्तयोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥
युद्धे हृत्वा बलात्कन्यां यत्राग्निन्याप इत्यृचा ।
उह्यन्तु स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुज्यते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥
आद्या वाग्रस्य षट् प्रोक्ता धर्माश्चत्वार एव हि ।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥
पञ्चमश्च तथाषष्ठः स्मृतौचतु चतुर्थयोः ।
द्वितीयस्यापि यत्प्रोक्ता एतयोस्तेन चाष्टमः ॥
वैधस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः ।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः ॥
अन्त्यावत्यधर्मौ चोक्ता वदाहः शत्रसूनुना ।
दथायुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥
वार्त्तायां प्राकृतोऽधस्ताच्चतुराद्यविवाहजैः ।
स्वात्मानं द्विगुणान्वस्थाद्दश सप्त च यश्च षट् ॥
स्त्रीणामाजन्मशर्मार्थं वंशशुद्धौ प्रयत्नवान् ।
वरं हि कवयो विद्वान् जात्यादिगुणसयुतम् ॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपञ्च कुलञ्चैव नवं वयः ।
आरोग्यत्वं विशेषेण पुंस्त्वे सत्यपि भवयेत् ॥
जातीरूपञ्च शीलञ्च वयो नवमरोगितः ।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत् ॥
स याति रूपं वित्तञ्च तथाग्रे वयसं दृढम् ।
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥
न जातिं नच विद्याञ्च वित्तं वाचरणं स्त्रियाम् ।
किन्तु तत्प्राप्तिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत् ॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता ।
न च तामुद्वहेत्कन्यां दारकर्मण्यनादृताम् ॥
कन्यायाश्च वरस्यापि सन्तोभयो भवेद्गतिः ।
तथा कन्यां वरो धीमान्वरयेद्वंशशुद्धये ॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति ।
सन्तानार्थं हि शुद्ध्यर्थं जात्यादिषु च नान्यतः ॥
दूरस्थानामविद्यानां मोक्षं धर्मानुयायिनाम् ।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः ॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीं ।
अतिलोम्नीं हीनलोम्नी मवाचमतिवाग्युताम् ॥
पिता पितामहो भ्राता माता मातामहोऽपि वा ।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः ॥
अधिकारी यदा न स्यात्तदस्याथ नृपस्य सा ।
तन्निराच स्वयङ्कार्यं कन्यापि वरयेद्वरम् ॥
पिङ्गलां कपिलां कृष्णां दुष्टवाक्काकनिस्वनाम् ।
स्थूलाङ्गजङ्घपादाञ्च सदा चाप्रियवादिनीम् ॥
त्यजेन्नागनदीनाम्नीं पक्षिवृक्षर्क्षनामिकाम् ॥
अहिप्रत्याख्यनाम्नीञ्च तथाभीषणनामिकाम् ।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम् ॥

अरोगिणीं सुशीलाञ्च तथा भ्रातृमतीमपि ।
सुलज्जां शुभनामाञ्च पतिप्रीतिकरीमपि ॥
श्वश्रूश्वशुरगुर्वादिशुश्रूषाकारिणीं स्त्रियाम् ।
अव्यङ्गकुलसञ्जाता मनभिश्वस्तवंशजाम् ॥
प्रस्वेदसुभगां धाता शुभमिच्छन् समुद्वहेत् ।
विप्रः स्वामपरेद्वेतु राजा स्वामपरे तथा ॥
वैश्यः स्वाञ्च चतुर्थीञ्च क्रमेणैव समुद्वहेत् ।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि ॥
उद्वहेदितिमत्यन्ते कुलधर्मसमाश्रिताः ।
उक्तलक्षणकन्यायां कृत्वा पाणिग्रहं द्विजः ॥
धर्मोद्वाहनकेनापि तदा दद्याद्धुताशनम् ।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः ॥
यदा वापि भवेद्भक्तिः सम्पत्तिर्वा तदा भवेत् ।
ऋतावृतौ स्त्रियङ्गच्छेत् स्त्रीच्छया चवरं स्मरन् ॥
सर्वन्तदिच्छया कुर्याद्ययाभर्याभवेद्धृतिः ।
भोज्यालङ्कारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः ॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यंतथा नृभिः ।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्युर्नृणां सदा ॥
नश्यन्ते ते तदा प्रीतौ तासां शापादसंशयः ।
स्त्रियश्च यत्र पूज्यन्ते सर्वदा भूषणादिभिः ॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि ।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्रुष्टाश्च दुष्टदेवताः ॥
वर्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः ।
नापमान्याः स्त्रियः सद्भिः पतिश्वशुरदेवरैः ॥

भ्राता पिता च माता च तथा बन्धुभिरेव च ।
स्त्री यस्य पुरुषस्यापि यतोभयो भवेद्गतिः ॥
तत्र धर्मार्थकामाः स्युः स्तद्धीना यतस्तमी ।
षट् कर्माणि गृहान्तेषां येषां भार्य्या पतिव्रता ।
पतिलोकन्तु ता यान्ति तपसा तेन योगवित् ॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी ।
पतिमुद्धृत्य याति द्यां काकीव पतिता रुजाम् ॥
जीवन्त्यापि मृतोवापि पतिरेव प्रभुः स्त्रियाम् ।
नान्यच्च दैवता तासां तमेव प्रभुमर्चयेत् ॥
अन्यस्य पि हि दुष्टा स्त्री यान्यभावा प्रियम्पतिम् ।
सा गच्छेन्नरकं घोरन्तद्रोहाद्युतेऽपि च ॥
नियोज्य गृहकृत्येषु सर्वदा ता नृभिः स्त्रियः ।
गृहार्थासक्तचित्तास्तास्तदेवार्हन्ति शोचितुम् ॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः ।
लज्जा चतुर्गुणा तासा माहारश्च तदर्द्धकः ॥
न वित्तं नैव जातिश्च नापिरूपमपेक्षते ।
किन्तु ताभिः पुमानेष इति मत्वेव भुज्यते ॥
विकुर्वाणाः स्त्रियो भर्त्तुरायुष्यधननाशकाः ।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि ॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते नृभिः ।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते ॥
चेष्टाचरित्रचित्राणि दैवानेव विदुः स्त्रियाम् ।
किं पुनः प्राणिमात्रा स्तु सर्वथा नष्टबुद्धयः ॥

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवरायैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेयुर्वार्द्धके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्॥
अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः।
दुर्वाचोऽपि सुवाचस्तास्तस्मादन्वेषयेत्ततः॥
शौचं वाचं च मेध्यत्वं सोमगन्धर्वपावकाः।
ददुस्तासां वरानेतांस्तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः।
रक्षणीयास्ततस्तास्तु सर्वभावेन योषितः॥
समाश्रयत्य मिथाद्यैर्दैवमस्तां नृणां तनौ।
अर्धकाया नृणां तास्ताः पृथक् धर्मादिना स्त्रियम्॥
नदी वापी स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेदविद्वान् यस्तदा भूः क्षयमेति च।
नदी वापी स्त्रियं गच्छेदिच्छं स्वदिच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यास्तु चतुरातिषु।
वन्ध्याष्टमेऽधिवेत्तव्या नवमे च मृतप्रजा॥
एकादशी स्त्रीजननी सद्यस्त्वप्रियवादिनी।
न वन्ध्येऽभिगमं कुर्यात्प्राणी गृहीतयोषितः।
कुर्याच्चेत्पितरस्तस्य पतन्ति रेतसोभुजः॥
भार्याधीनं सुखं पुंसां भार्याधीनं गृहं वनम्।

भार्याधीना सुखोत्पत्तिर्भार्याधीनः शुभोदयः ॥
यत्र भार्या गृहं तत्र भार्याधीनं गृहं वनम् ।
न गृहेण गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
गृहीस्याद् गृहधर्मेण स वै पञ्चमखादिकाः ।
तद्धीनो न गृहस्थः स्यात् भार्यया कथ्यते गृही ॥
श्रौतो वा यदि वा स्मार्त्तः सर्वेषां गृहमेधिनाम् ।
काण्डन्युदककुम्भीच चुल्ली पेषण्युपस्करम् ॥
पञ्चयज्ञविधानेन कुर्यात्पञ्च मखान्मखान् ॥
पञ्चसूना वहन्त्यत्र सूनादोषो न विद्यते ॥
यदादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः ।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः ॥
यः स्नात्वाऽहरहः कुर्या द्देवांश्च मनुजान् पितॄन् ।
तर्पयेदम्भसा भक्त्या पितृयज्ञः स वै मखः ॥
श्रौतेवा यदि वा स्मार्त्ते यज्जुहोति हुताशने ।
विधिवत्तिः स वै विप्रः स तु देवमखः स्मृतः ॥
दशस्वाशासु यः कुर्याद्द् तत्तोयो बलिं द्विजः ॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः ।
समागतातिथिं भक्त्या यद्भोजयति नित्यशः ॥
अन्यानभ्यागतांश्चैव समानीयेष्ट उच्यते ।
एवं पञ्चमखत्वं स्यान्मधुमांसाज्यपायसम् ॥
स सन्तर्प्य पितॄन् देवान् मनुजः स्वर्गमाप्नुयात् ।
गृहस्थायौषधिं मत्वा त्वाचं धेनुं चतुःस्तनीम् ॥
स्वर्गौकसः पितॄन् देवान् पुण्यातिथिवरानपि ।

स्वर्गौकोभिः पितृभ्यस्तु पुज्यास्तेऽतिथयो द्विजैः॥
चत्वारस्तु सुता एते यजुर्वेद उदाहृतः।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा॥
दैवानि भागधेयौ द्वौ अन्यश्च मनुजां स्तथा।
पितृणाश्च चतुर्थस्तु इतिवेदनिदर्शनम्॥
इति निर्वृत्य विधिवत्सकलं कर्म नैत्यिकम्॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्नं मथापहम्।
अदत्त्वा पोष्यवर्गस्य ह्यकृत्वाऽध्यापनादिकम्॥
अमार्जिकाश्च योऽश्नीयात्सोऽश्नीयात्किल्विषं द्विजः।
प्राङ्मुखादिक्रमेणाश्नु दिव्यायुः कीर्तिकीर्त्तितम्॥
दिव्याग्निस्थानमश्नाद्यादूयस्तदश्नन्ति राक्षसाः॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः!॥
वक्ष्यमाणो विधिः पुन्यः पावनः प्रेत्य चेह च।
यो विधि दैवतान्यस्त संसारबन्धनाशकृत्॥
तद्विदस्त दिवं यान्ति मुक्ता देवान् ऋणेन च।
उद्धरेद्यदि मत्वाश्नु पुरुषानेकविंशति॥
सर्वेष्टिफलभाक् यायाद्वे धमं क्षय मक्षयम्।
यः कालाकालविद्विपो नैनःस्वर्गो स कर्हिचित्।
सोऽस्पृष्टो नाविशेत्तत्र यश्चवा नैव संवृतौ।
दशपश्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम्॥
जीवो यत्र विशुद्धोत सा कला षोडशी स्मृता।
सर्वमेतत्तया व्याप्तं शैलं वं सचराचरम्॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता।

न वेदं वेदमित्याहुर्वेदस्थाम परम्पदम् ॥
तत्पदं विदितं येन स विप्रो वेदपारगः।
आकृतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तज्ज्ञाप्य तच्च वै ज्ञेयं तद्व्रतं तदुपासितम्।
तां कलां यो विजानाति स कलज्ञो द्विजः स्मृतः ॥
यत्तुरीयं पदं प्रोक्तं यस्मिन् लीन मिदं जगत्।
तत् ज्ञात्वा परमं तत्त्वं न भूयः पुरुषो भवेत् ॥
प्राणमार्गास्त्रयः प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः।
ईड़ा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
ईड़ा च वैष्णवी नाड़ी ब्रह्माख्या पिङ्गला स्मृता।
सुषुम्ना चेश्वरी नाड़ी त्रिधा प्राणवधा स्मृता ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंस्थितम्।
मध्येतु विषुवं ज्ञेयं पुटद्वयविनिःसृतम् ॥
संक्रान्तौ विषुवञ्चैव यो विजानाति विग्रहम्।
नित्यमुक्तः स योगी च ब्रह्मणादिभिरुच्यते ॥
मध्याह्ने चार्धराते च प्रभातेऽस्तमये तथा।
विषुवन्तं विजानीयात्पुटद्वयविनिःसृतम् ॥
हृत्पुण्डरीकमरणीं मनोमन्थनमेव च।
प्राणरज्ज्वा न्यसेदग्निं रात्राध्वर्यु प्रतिष्ठितः ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु।
रेचकेणोर्ध्ववक्त्रेण ततो होमं करोति यः ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम्।

तद्दै विकासते पद्मं प्राणवन्तश्च सर्पति॥
वामहस्तधृते पात्रे दक्षिणे चाम्भसि स्थिते।
सनाद सुस्वरेक्षिप्र चाच्छन्नाग्रन्तु पूरयेत्।
पूरयेत् पूरकं प्राज्ञ निश्चलं कुम्भकं भवेत्।
विनिश्वस्य शनैर्वायूरेचकान्तं विनिर्दिशेत्॥
स्वाहान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना च वायुभिः।
जितात्मा योषितः षष्ठः षड़ाहुत्याहुतिं भवेत्॥
जिह्वादन्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत्।
दशनैः स्पृष्टमात्रेण पुनराचम्य चारभेत्॥
मुख माहवनीयोऽग्निर्गार्हपत्य स्तथोत्तरे।
उदये दक्षिणाग्निश्च ग्रहाग्निश्चापि दक्षिणे॥
सभ्यश्चोत्तरतश्चान्त्य इत्यग्निस्मरणाक्रमः।
प्राणाग्न्येव हि होतादि चिन्तयेत्तद्वदेव तु॥
होतारं प्राणमित्याहुरुद्गातारमपानकम्।
ब्राह्मणं व्यानमित्येके उदानाध्वर्युमित्यपि॥
समानश्चेह यज्वान मिति ऋत्विक् क्रमं बुधः।
अहङ्कारं पशुं कृत्वा प्राणञ्च पशुमित्यपि॥
बर्हिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृताः।
मनोविभक्ता त्वर्गजिह्वा इति तास्ते प्रचक्षते॥
कृत्वा तु मात्समोङ्कारं ऊङ्कारञ्च तथा पुनः।
उत्तिष्ठञ्जनताग्रे च हरिश्लोहितपिङ्गलः॥
स्मृतः परिधये तुभ्यं जुहद्भि र्दैवतञ्च यत्।
विजिह्वा यो जाठराग्नेः स्वाहा प्राणाय वाल्पयः॥

इन्द्रगोपकवर्णाय त्रिजिह्वायाग्निदैवतम् ।
ॐ स्वाहा व्यानाय स्वाहाकारान्त मुच्चरेत् ॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम् ।
स्वाहोदानाय सोङ्कार मनलाय पराचिषे ॥
तडित्समानवर्णाय वाय्वाग्निदैवतायते ॥
ॐ स्वाहाच समानाय ॐ स्वाहा चाह वेधसे ।
तर्जनीमध्यमाङ्गुष्ठै र्लग्नप्राणस्य चाङ्कृतिः ॥
मध्यमानामिकाङ्गुष्ठै र्व्यानस्य परिकीर्तिता ।
कनिष्ठानामिकाङ्गुष्ठै रपानायाङ्कृतिः स्मृता ॥
मध्यमानामिकास्वन्या मुदाने न्कुर्याद्बुधः ।
समाने सर्वकृत्य आङ्कृतिः स्यात्समानता ॥
जलं पीत्वा तु तृप्यन्ति रेचयच्च शनैः शनैः ।
ततोऽन्यद्द्रव्यमश्नीयात् पूरणायोदरस्य च ॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते ।
अपानेन तु भुञ्जन्ते तेषां सुखमपानवत् ॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्त मिदमाचरेत् ।
इहामुत्र च पूज्यत्वं ब्रह्मभूयाय कल्पते ॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत् ।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम् ॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः ॥
एकं पिबति गण्डूषं यजेदर्द्ध धरातले ।
पीतेन पितृतृप्तिस्तु भुमौ च भूमिदेवता ॥

पिबेद्‌द्वितीयं गण्डूषं ब्राह्मणो ज्ञानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत्॥
रहस्यं सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्बलम्।
ज्ञानानामुत्तमं ज्ञानं न कस्यचित्प्रकाशयेत्॥
ज्ञानानि च प्रकाश्यानि पुंसामविदुषां वदेत्।
स प्राशस्य फलं तेषा मात्मानं नरके नयेत्॥
अश्नीयाद्विधिवच्चयस्तपात्रः कृतपरीहृतः।
पूजितान्नमवाग्‌जुष्टः स पैशाच ममाक्षिकम्।
वाग्यतस्त्वस्तपात्रोऽपि क्रियमाणेऽपि वा द्विजः॥
तस्य त्रिरात्रपुण्यस्तु दानेऽपि कवयोविदुः।
चतुस्त्रिकोणाद्युक्ता च विप्रक्षत्रविशां क्रमात्॥
वदन्ति परिक्रम्यन्ति तद्दीनान्नन्तु राक्षसम्।
गृह्णीयात्प्रागपोशानं तथा भुक्त्वा सकृन्नृपः॥
अनग्नममृतं तत् स्यात् भक्तमन्नं द्विजन्मना।
काले भुक्त्वा समुत्थाय प्रोच्य विप्रं समीक्ष्य च॥
श्रोत्र.पतिस्तत्र स्थित्वा चिन्तयेद्‌बहुकृत्यकम्।
भार्य्या भोजनवेलायां भिक्षां सप्ताथ पञ्च वा॥
दत्त्वा शेषं समश्नीयात्सापत्यभृत्यकैः सह।
निहत्य साऽपि सकलं किञ्चित् स्थित्वा सुखेन च॥
स्वस्वीयकृत्यकार्य्येषु सापि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां कृत्वा चैवाग्न्युपस्तरणम्॥
किञ्चित्पश्चात्समश्नीयात्सायं प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयमथोति च॥

शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते।
सुशयने शयीतायो एकान्ते च स्त्रिया सह॥
सेवनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः।
ऋतुस्नायात् सुपुत्रार्थी आधानविधिना द्विजः॥
प्रसह्य भस्मना योनि मितितस्येति दर्शनात्।
कृत्वाधानविधानन्तु स्त्रीयोग मभ्यसेत् पुनः॥
मन्येदविक्षतौ योनौ विकाराद्विकृताः प्रजाः।
ब्राह्ममुहूर्त्तमुत्थाय प्रातःसन्ध्या मुपक्रमेत्।
आसूर्योदयनात्प्रातः सायञ्चै वर्चदर्शनात्॥
अनृतं मद्यगन्धञ्च दिवामैथुनमेव च।
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता॥
सिन्दूरारुणाभं भाति यौवनं यौवतारति।
उदयेऽस्तमये भानौ तावत्सन्ध्येति शक्तिजः॥
आधानतो द्वितीयेतु मासे पुंसवने भवेत्।
सीमन्तोन्नयनं षष्ठे कार्य्यं मासेऽष्टमेऽपि वा॥
जातस्य जातकर्मादि विधिवज्जातपूर्वकम्।
दिने चैकादशनामकर्मादिवद्द्विजन्मनाम्॥
तुर्यनिष्क्रमणं मासे षष्ठेऽन्नप्राशनं तथा।
चूडाकर्म द्वितीयेऽब्दे कार्यं वा कुलधर्मतः॥
सर्वं क्रियां विमन्त्रं तु कार्यं कार्यविमुक्तये।
न स्पर्शस्य द्विजाः ख्याताः स्त्रियास्चैव कथञ्चन॥
स व्रात्यः स परित्याज्यो द्विजो यस्माद् द्विजन्मनाम्।
मुञ्जमौर्वैशणानान्तु त्रिवृता रशना स्मृता॥

कार्पासशाणमेषोर्णान्युपवीतानि निर्वृतिः ।
पालाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ॥
कार्ष्णं च रौरवं वास्त मांजनानि द्विजन्मनाम् ।
शिरोललाटनासान्तः क्रमाद्दण्डाः प्रकीर्तिताः ॥
अव्रणाः सत्वचो दग्धा ऋज्वाः शुभकरा नृणाम् ।
गायत्र्या त्रिष्टुप् जगत्या त्रयाणामुपनायनम् ॥
गायत्र्यामिव शेषो वा युञ्ज्यादित्यपरेषु च ।
सवितुः पाठः सवितुर्विश्वारूपाणि च क्रमात् ॥
औपासनादिका मन्त्रा विप्रादीना मुदाहृताः ।
ब्रह्मणो विप्रगेहेषु नृपस्येषूत्तमेषु च ॥
वैश्यो विप्रो नृपः स्वेष कुर्याद्भिक्षां स्ववृत्तये ।
एकान्नञ्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रते स्थितः ॥
भिक्षाव्रतं द्विजातीनां उपवाससमं स्मृतम् ।
प्रतिग्रहो न भिक्षा स्या न तस्याः परपाकता ॥
सोमपानसमा भिक्षा यतोऽश्नीत स भिक्षया ।
भिक्षया यस्तु भुञ्जीत निराहारः स उच्यते ॥
भिक्षामश्चाभिशस्तेषु साचारेषु द्विजेषु च ।
भिक्षेत भिक्षां क्रमशो गुरोः कुलं विवर्जयेत् ॥
स्वसारं मातरश्चापि मातृस्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां याचेतं न विमानयेत् ॥
भवति ! भिक्षां मे देहि भिक्षां भवति ! देहि मे ।
भिक्षां मे देहि भवति ! क्रमेणैवमुदाहरेत् ॥
द्वादशाब्दं व्रतं धार्य्यं षट् त्र्यब्दन्तु श्रुतिं प्रति ।
आदित्याब्दे व्रजेत्तद्वै दत्वा तु गुरवे वरम् ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते॥
अष्टैकादशद्वादशाब्दानि सगर्भाणि द्विजन्मनाम्॥
मुख्यकालो व्रतस्यैष स्यान्य उक्तो विपर्यये॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम्॥
नाध्येयो नैव वोढव्यो व्यवहारविवर्जितः।
न याज्यानार्थकार्य्येषु प्रयोज्यास्तु इति स्मृतिः॥
स्त्रीवल्लिलोमवक्त्रा ये निर्लोमदेहवक्षसः।
उदरस्नानपत्याश्च अदृश्यास्ते विगर्हिताः॥
येऽजस्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम्।
दीर्घायुष्ट्वं प्रजावत्त्व मरोगित्वं यशोदिवम्॥
क्षीणायुष्ट्वं दरिद्रत्व मप्रजत्वं मरोगिताम्।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः॥
प्रातर्वा यदिवा साय मद्यादन्नमनर्चितम्॥
नानाज्यस्नानपोशानं शुभप्रेप्सु द्विजन्मनाम्।
आपोशानं विना नाद्यान्नादद्यान्न मनर्चितम्।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते॥
षोड़शाब्दानि विप्रस्य द्वाविंशति नृपस्य च।
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्युरतः परम्॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः।
न व्यवहार्याश्चाब्रह्मीस्त इति धर्मविदो विदुः॥

स्त्रीणामुद्वाह एको वै वेदोक्तपावनो विधिः।
स्त्रीपुंसोर्यत्र विन्यासः सुम्नोरन्योन्य मुच्यते ॥
स्वस्मिन्यस्माद्विभर्त्येषा पतिर्बिभर्ति सोऽपि ताः।
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥
पतिर्विशति यज्जायां गर्भो भूत्वेह मातरम्।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोक्ता तेन जाया वै यदस्यां जायते पुनः।
इयमाभवनं भार्य्या वीजमस्यां निषिच्यते ॥
देवा अचुर्मनुष्याश्च भार्य्या तु जननी तु यः।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्य्या जाया जनन्येषा इति वेदप्रतिष्ठितः।
यस्मात्त्रातिपुंनाम्नो नरकात् पुत्र उच्यते ॥
सर्वां संहृष्टिमाहृत्य तद्गतं ह्यामौकताम्।
यः पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं मे सफलं प्राप्त मैहिकामुत्रकञ्च यत्।
किं दण्डै रजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः ! पुत्त्रमिच्छध्वं स वै लोके वदावदः।
प्राणान्नमुस्मिन् शरणं हि वासो रूपं हिरण्यं पशवो विवाह
सखा च यज्वा क्षपणश्च पुत्रो ज्योतिः परम्पुत्र इहाप्यमुत्र।
स पुण्यकृत्तमो लोके यस्य पुत्रश्चिरायुषः।
विशेषेण द्विधर्मज्ञः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम्।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद् द्विजत्वं यदस्यां जायते पुनः।

पुत्रस्यापि न पुत्रत्वं यस्त्राति नरकार्णवात्।
यः पिता स तु पुत्रस्तु आयेवर्हि जनन्यपि॥
न पृथक्त्वं विदुस्तज्ज्ञा अनयोः परयोरपि।
अयं हि पन्था पुत्रपस्य तस्य ध्रुवं भवेत्पुत्रजन्मेह यस्य।
तस्मीत्स चोर्ध्वं पशवो वयांसि पुत्रार्थिनो मातरमारुहन्ति॥
जनिष्यमाणा दृच्छन्ति पितरः स्वकुले सुतान्॥
कश्चिद्भूत्वा गयायां नोऽवश्यं पिण्डान् प्रदास्यते।
यद्वात्यन्योऽश्वमेधेन नीलं मोक्ष्यति गोष्टहे॥
दृष्टव्यं पितृभिः सर्वपुत्रेभ्यः सकलं फलम्।
शुश्रूषौर्यकश्चित्तो वा प्राणान्मोक्ष्यति गोष्टहे॥
दानदो वा कुरुक्षेत्रे स्नानी वाथ भविष्यति।
पुच्छे शिरसि यः शुक्लः शुक्लपा लोहितं वपुः॥
देशाद्यभीष्टो नीलो यः कृष्णः पावनो वृषः।
रक्तो वा यदि वा शुक्ल भ्रुविषाणः शुभेक्षणः॥
यो न हीनातिरिक्ताङ्गः स्वं वा वृषं समुत्सृजेत्।
दुहितापि तथा साध्वी श्वशुरयोः कर्पालकृत्॥
पतिव्रता च धर्मज्ञा अपि दुर्गतिलङ्घयेत्।
यः पिता स च वै पुत्र स्तत्समा दुहितापि च॥
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ।
तत्सुतः पावयेद्वंशान् लौल्यं मातामहादिकान्॥
दौहित्रः पुत्रवत् स्वर्गं भक्तौ शास्त्रैश्च तौ समौ।
आधानादिकसंस्काराः प्रोक्ताश्चैव द्विजन्मनः॥
कर्तव्याश्च स्वशाखोक्ताः केचित् कुलक्रमेण च।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मखदीक्षा च विविधा तथैवान्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इतिशास्त्रविदो विदुः ॥
देशाचारस्तथाधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
क्लेशभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्ययः ।
नृणामाचारतो धर्मः स्यादधर्मो विपर्ययात् ॥

आचारवन्तो मनुजा लभन्ते आयुश्चवित्तं च सुतश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोक मत्रापि विद्वज्जनपूजितास्च ।
वेदाः महाङ्गैः सपुराणविद्याशास्त्राणि वेद्यानिच तद्विहीनम्
कुर्युर्नवैतानि च संस्मृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान्
वेदास्त्यजेयु र्निधनस्य काले नीडं शकुन्ता इव जातपक्षाः ।

आचारहीननरदेहगताश्च वेदाः
शोचन्ति किन्नु कृतवन्त इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रहीणे
स्यानन्तदत्र भवबन्धननाशकर्त्ता ।

कर्त्तव्यं यत्नतः शौचं शौचमूलं द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्यु र्निष्फलाः क्रियाः ।
तस्माद्धि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपायनं च त्रयं शौचमाहुर्मनीषिणः ॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौच माहुराभ्यन्तरं बुधाः ॥
यस्य पुंसस्तु यच्छौचं शौचैस्तस्यं किमन्यकैः।
वाङ्मनोजलशौचानि यशः सदा द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स सर्गो नात्र संशयः।
स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्वधदिच्छीर्षुर्मनुजः परस्य।
विवदरत्यन्तमवाच्यवाचं कथं स शुद्धिं समुपैति शौचात् ॥
किं निकामस्य नारीभिः किं गतासोश्च सम् द्विजैः।
यतेन्द्रियस्य किं शौचै निष्फलं। मुर्खदानवत् ॥
न गतिर्मूर्खदानेन न तारोऽस्ति चात्मनः।
तस्मात्तस्य न दातव्यं सह दात्रा स मज्जति ॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
होतव्यश्च समिद्धाग्नौ जुहुयात्को नु भस्मनि ॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सम्बेषं मूर्खे दानं विवर्जयेत् ॥
ग्रहीता च तार्वाद्वद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तश्च नदीं वैतरणीं द्विजः ॥
यो मूर्खो विप्रदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्ग मात्मानं तृडांश्चैव न पीड़येत् ॥
न विद्यते तयोर्यस्य अददश्च प्रतिग्रहम्।
अद्दानः स दातारमात्मान मप्यधो नयन् ॥
हेम भूमिं तिलान् गाश्च अविद्वान् द्विः ददाति यः।

भस्मीभवति सोऽङ्गाय दातुः स्यान्निष्फलं भवेत् ॥
तस्माद्ददाति नो दद्यादल्पयोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्य मर्चितम् ।
विद्वद्भिर्नत्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
मद्विप्रास्तान्न गृह्णीयु र्गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मार्गगां द्विमुखीं गजम् ।
नवश्राद्धान्नभक्तश्च वर्ज्या निमाल्यवद्द्विजाः ॥
एते याम्यन्त्यतामिस्रं यावन्मनुसहस्रकम् ।
त्रिणाच वक्षश्च रवेश्च जाता
पृथ्वीच येयस्च मुनिश्च गोश्च ।
कालेव पात्रे विधिना प्रदत्ताः
प्राप्नोति लोको नियमे तदुक्तम् ॥
वेदाविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वजनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अनृचोऽपि निराचाराः प्रतिवासिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते वत्सवादिषु ॥
प्रोक्तप्रतिग्रहाभावे प्राप्तायां कष्टदापदि ।

विप्रोऽस्मिन् प्रतिगृह्णीया यतस्ततोऽपि नाशभाक्॥
गुर्वादियोष्यवर्गार्थं दैवाद्यर्थञ्च सर्वतः।
गृह्णीयाद्धनं हिंसाद्यन्न भक्त्यर्थमात्मनोऽपि च॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशनं शाकं प्रत्यक्षं यं नहि क्वचित्॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता।
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम्॥
शक्तः प्रतिगृहीतुं यो वेदवृत्तम् संवृतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः॥
प्रतिग्रहमृणं वापि याचितं यो न यच्छति।
तत्कोटिगुणशस्तोऽसौ स्वतो दासत्वमृच्छति॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही॥
अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवारितः॥
वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्ध्वं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमथाधिकृत्।
वैश्यो निषिद्धनृपतिप्रतिग्राही परे क्रमात्॥

परपाकं वृथामांसं देवानामृषिदूषितम् ।
अनुपाककृतं चैव तथा मांसञ्च नादिकम् ॥
न भोक्तव्यमभोज्यान्नं कन्दमूलादिकञ्च यत् ।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम् ॥
मद्यमुक्तः सदा कुर्याच्छनैर्धर्मं समाचरेत् ।
यमान् स नियमान् कुर्यान्नार्हस्थं व्रतमाचरेत् ॥
मातृपितृउपाध्यायान् गुरूनृत्विजान् सदार्चयेत् ।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत् ।
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा ।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रयः ॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः ।
दयध्वमिति वै वेदाः ! श्रुतिर्वाजसनेयिकी ॥
दत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुर्ध्वनिन्दिवि ।
ददद्देति दमं दानं दयामिति च शिक्षयेत् ॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा ।
न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा ॥
तिला अपि समा देया यस्मात् अपिच नान्यथा ।
प्रपीडानि न यन्त्रेषु ब्रूयुरेतन्मनीषिणः ॥
विक्रयं व्यपदेशेन दुग्धदध्यादिसर्पिषम् ।
शुश्रूषां न तिरस्कुर्य्याद्दुपासां नावधीरयेत् ॥
न निन्द्यांश्च समाभ्यर्च्यान्न विक्रीणीत गर्हितान् ।
अदेयानि नवै दद्याद्त्याज्यानि न वै त्यजेत् ॥
अभाष्यं नैव भाषेत्तु होमाङ्गायांश्च न क्षिपेत् ।

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च ।
मतिं शूद्रस्य यो दद्याद्यश्चैनं पर्युपासते ॥
न किञ्चित्तस्य चादेयं व्रतादिनियमादिकम् ।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्पृष्टाद्वा नाङ्गरादिषु ।
वेदविद्याविताननि विक्रीणीत न कर्हिचित् ॥
नापात्यानि रसाद्यानि भूक्तिश्चाम्बरेऽपि च ।
नापश्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका न च पालाशा न वृक्षादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु ।
पद्भ्यां स्पृष्टो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्तुरम्यादि वाय्वग्न्यो र्नान्तरा गतिः ।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डौ नो ग्रार्च्यौ विष्णुतार्क्ष्ययोः ।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
भानुव्योमादिकानान्तु न कुर्य्यादन्तरागतिम् ।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहाश्नुयात् ।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः ।
नापगाङ्गेयपर्य्यादि नचविष्ठा गृहान्तिके ॥
अतिकालातियानं च शुभमिच्छन्विसर्जयेत् ।

यश्चेन्द्रचापभङ्गाद्या मूलनाम्ना न निर्दिशेत् ।
इन्द्रचापं ध्यायन्ति ये न खातव्याः परस्य ते ।
वर्जयेद्दादनश्चैव पादयोः कांस्यभोजने ॥
पैशुन्यं मर्मभेदञ्च न वदेन्म्लेच्छभाषितम् ।
प्राकृतं वस्त्रशास्त्राणि पाषण्डैर्मतकानि च ॥
न करं मस्तके दद्यान्मस्तके न करं तथा ।
न जातु गो शिरोधार्य्यं न प्राट्तशिरा भ्रमेत् ॥
वेनाश्च वस्त्रश्च कदर्यचौराः क्लीवाभिशस्तागणिकाम् जातु ।
यो वृत्तजीवी गणदीक्षका ये तेषां न भोज्यं त्वशनं द्विजातेः ॥
क्रूरातुरा वृत्तचिकित्सकाश्च या पुंश्चली यौ च विरुद्धशत् ।
व्रात्याश्रमत्ता प्रबला जिताश्च अशांस्त्वमेषामशनं द्विजस्य ॥
ये दाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतितश्च यश्च ।
ये पुत्रभार्यो बहुयाचका ये विप्रस्य नैकेऽपि न भोज्यमन्नम् ॥
यः सोमशस्त्रं सुरुताम्बुचक्रं क्षीराज्यमांस लवणाजिनानि ।
क्षौमाज्यलाक्षाश्च तिलान् फलानि एषां न विक्रीत कदन्नमाद्य
जीवन्ति नित्याश्चरसाश्रयाणां कर्मोच कार्येऽपि च तत्सुवार
राजा नृशंसो रजकः कृतघ्नो भोज्यत्र तेनैव च हिंसकाश्च ॥
ये चैलधाराश्च सुराश्रता ये शून्यं न वाचोत्त्वनृतं वदाश्च ।
ये बन्दिनो येऽपिच याचकाश्च विप्रस्य चैतेऽपि न भोज्यशस्याः
मध्वाशनमधूच्छिष्ट दधिक्षीररसोदनः ।
मनुष्यः फलपूजाश्च कुशवत् पुष्पवीरुधः ॥
कोशेयकेशकुतपा नीरं विषं रसस्तथा ।
शाके कुशकपिण्याक गन्धनौषधिमूलकाः ॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तथोपपत्तिवेश्मनः॥
यो बद्धस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्दुष्यानद्दूवत्स्य स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जातापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिगृहीतभार्य्यायां सत्यां यस्तु नराधमः।
शूद्रीहस्तेन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये नोढभार्य्यास्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु गृहमेधिनी।
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायां स्वयं जातो ह्यस्य सोऽपि तत्पुनः।
अन्यस्याश्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विंशतिं त्वेकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरर्त्वोश्च प्रौष्ठपद्या परस्य च।
पञ्चवपरपक्षेषु कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रौष्ठपद्या द्विजाग्निस्थो त्र्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रयणद्वयम्।
चतुर्मासीव्रतान्येव कार्य्याणि साग्निकैर्द्विजैः॥
अनूचानः स्नातं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्ताश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्त्तिताः ॥
संक्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्चदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेत नैतत् कर्त्तव्यं कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्धं यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
शिलोञ्छवृत्तिर्विप्रस्य तथा चैकाह्निकाशनः ।
त्र्याहाह्निकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥
पूर्व पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्न तत्पूर्वकृतसमागनः ॥
सोमेष्टिं पशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुर्वै तदसम्भवेत् ॥
सत्यामशस्य सम्पत्तौ न कुर्य्याद्धीनदक्षिणाम् ।
तत्कृतश्च भवेद्दर्थं प्राप्नुयात्पशुयोनिताम् ॥
अशापूतञ्च दातव्यं पात्रे दानं समर्चितम् ।
याचितेऽपि हि दातव्यं पूतं स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
आशूद्रस्यादशूद्रान्नो मृतश्चैवोपजायते ।
द्वादशं दश वाष्टौ च गृध्रशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति॥
अमृतं ब्राह्मणस्यान्नं चत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः।
श्मशानमेव तच्छूद्रस्तस्मात्तं परिवर्जयेत्॥
क्षणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्षितः।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यते॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः।
द्विजभक्तिर्वणिग्वृत्तिः सच्छूद्रः संप्रकीर्तितः॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया।
संस्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत्॥
उच्छिष्टञ्च पदा स्पृष्टं शुक्तञ्च पतितेक्षितम्।
पर्युषितञ्च विट्कास्थं केशकीटाद्युपाहतम्।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत्॥
नाश्नीरन्नेतदशनं सामिपन्ते द्विजातयः।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादयः॥
सस्नेहमशनंभोज्यं चिरस्थमपि यद्भवेत्।
अनक्ता अपि भोज्याः स्युः सद्यश्चेता यवादयः॥
गर्भिण्या वत्ससुभयागवादे वर्जयेत्पयः।
क्षीणामेकशफोष्ट्रीणां तथारण्यकमाविकम्॥
प्रसूता ब्राह्मणी गौश्च महिष्याजा तथैव च।
दशरात्रेण शुद्ध्येत भूमिष्ठं च नवञ्जलम्॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मांसं कीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं ये क्रव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
मेधाद्यान् पञ्च षट् पञ्च सिंहाद्यान्नखकांश्च षट्
धर्मशास्त्रोदितानस्मात् सर्वाकारांश्च वर्जयेत् ॥
भक्ष्यप्राणां त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम् ॥
यदैवाप्ययसम्पत्तिस्तदैवामन्त्रयेद्द्विजान् ।
कृत्वा च विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात्
नाद्यादविधिना मांसं मृत्युदिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ।
गृहस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्याच्छ्राद्धादिक उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हतं स्वर्गादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यश्च यत्तु स्यादन्नं दत्त्वा तु देहिनाम् ।
सतामिति निरातङ्को लोमहृष्टं निगद्यते ।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि हृत्तौ स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विजः ।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समाः ॥

अव्यक्तेनच धर्मज्ञ! तथा मुक्तिशिखेन च।
स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः॥
द्रव्यस्य नाम गृह्णीयाद्दाता तथा निवेदयेत्।
तोयं दत्त्वा तथा दाता दाने विधिरयं स्मृतः॥
प्रतिगृह्णीता सावित्रं सर्वमत्र तूदीरयेत्।
सार्धद्रव्येण तत् सर्वं तद्द्रव्यञ्च रुद्रंवतम्॥
समापय्य ततः पश्चात्कामं स्नात्वा प्रतिग्रहम्॥
प्रतिग्रही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात्।
मन्दं पठेत राजान्यादुपांशु च तथाविशः॥
मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम्।
सोङ्कारं ब्राह्मणो ब्रूयात् निरोङ्कारं महीपतिः॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च।
न दानं यशसे दद्यात् नभयान्नोपकारिणे॥
न नृत्यगीतशीलेभ्यो हासिकेभ्यश्च धार्मिकः।
पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम्॥
असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत्।
सञ्चयं कुरुते यस्तु समादाय इतस्ततः॥
धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत्।
यस्मै दद्याद्द्विजा! दस्य नत्वा तमुदरी नरः॥
दानञ्च हृदि संचिन्त्य जलमध्ये जल क्षिपेत्।
वदन्ति मुनयो गाथां परोक्षे दानसत्फलम्॥
परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिशो भवेत्।
पात्रं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम्॥
अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत्।

दानकाले तु संप्राप्ते पात्रे चासन्निधौ जलम्॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते।
विष्णुस्ते तारणायास्तु गृह्णन्ति हि करोदकम्॥
तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगाः।
लक्ष्मीदृष्टा च यद्दत्तं दरिद्रायार्थिने द्विज!॥
तदक्षय्यं समुद्दिष्ट मिति पराशरोऽब्रवीत्।
राज्यभ्रष्टञ्च राजानं यस्तं राज्ये निवेशयेत्।
विष्णुलोकसमं भुज्य भवेत्पतिर्दिवौकसाम्॥
प्रतिगृह्य द्विजार्थं यो न यच्छति च तं पुनः।
न च स्मारयते विप्र स्तुल्यन्तदुपपातकम्॥
प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति यः।
स वै द्वादश जन्मानि शृगालीं योनिमाप्नुयात्॥
धेन्वादीनि प्रवक्ष्यामि यथा लक्षणदीक्षितान्।
मानभूमिन्तिलादीनां यथावत्तां निबोधत॥
अजातदन्ता या तु स्याद्गर्भदन्तसमन्विता।
वर्षादर्वाक् चतुर्थाच्च यावदेतत् प्रकीर्तिता।
सुशीला च सुवर्णा च अरोगा च यशस्विनी॥
सुवत्सा प्रथमं सुता धेनुर्गौरभिधीयते।
अरोगा या परिक्लिष्टा प्रसवत्यप्रसूतिका॥
सूता सातिपयोयुक्ता सा गोमामान्यतः स्मृता।
पूर्वोक्तगुणसंयुक्ता प्रत्यङ्गे प्रसदा तथा॥
साथ गौर्धेनुरित्युक्ता वाशिष्ठस्य वचो यथा॥
पञ्चगुञ्जो भवेन्माषः कर्षः षोडशभिश्च तैः।
तैश्चतुर्भिः पलं प्रोक्तं दाने मानं च पुण्यदम्॥
भद्रनारीकहस्ताभिः प्रसृतीभिश्च ताः स्वभिः।

माषकास्तैश्चतुर्भिश्च वेतिकेति प्रकीर्त्तिताः ॥
ताभिश्चतसृभिः प्रस्थश्चतुर्भिराढकैश्च तैः ।
द्रोणश्चतुर्भिस्तैः स्यात् धान्यमानं प्रकीर्त्तितम् ॥
तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते ।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्च वैफलम् ॥
पातैश्चतुर्भिः स्यात्सा पाटी तस्य चतुष्टयम् ।
करकं चतसृभि स्ताभिश्चतुर्भिस्तैर्घटः स्मृतः ॥
इत्येतैः कविभिः प्रोक्तं घृतगोतिलगोसमाः ।
किञ्चिच्च वस्तुनोक्तेन दानस्य तु पुनः पुनः ॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम् ।
सकृद्दधाय विप्राय भक्त्या परमया वसु ॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने ।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु ॥
तथा निष्फलजन्मानि तथा तव निबोधत ।
वृथा जन्मानि चत्वारि वृथा दानानि षोड़श ॥
तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम ! !
अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृताः ॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च ।
अपुण्यस्थाने यद्दत्तं वृथादानं प्रकीर्त्तितम् ॥
आरूढपतिते दानं अन्यायोपार्जितस्य यत् ।
व्यर्थं मब्राह्मणे दानं पतिते तस्करेऽपि च ॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके ।
ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ ॥
विक्रयिणो चैव यस्य चोपपतिश्चरे ।

स्त्रीजिते चैव यद्दत्तं व्याजग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोडश।
तमोवृतस्तु यो दद्याद्भयात् क्रोधात्तथैव च ॥
विद्दूत्तांश्च तत्सर्वं भुङ्क्ते गर्भस्थ एव हि।
ईर्ष्यया मन्युना दानं यद्दान मर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
अप्रमेयगुणं तद्धि उपतिष्ठति यौवने।
यत्सद्विप्राय वृद्धाय भक्त्या परमया व तु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम ! ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्ग मभीप्सता।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणाम् ॥
करे स्त्रियास्तथा कन्यां दासदासौ तथा द्विजः।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः।
आरुह्य च गजस्योक्तकर्णस्त्राश्वः प्रकीर्तितः ॥
तथा चैकशफानाञ्च सर्वेषा मविशेषतः।
प्रतिगृह्णीत गां शृङ्गे पृष्ठकृष्णाजिनं तथा ॥
कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः।
प्रतिग्रहं तयोर्वस्त्र आरुह्येव तु पादुके ॥
ईशायान्तु रथो ग्राह्यः छत्रं दण्डे तु धारयेत्।
द्रुमाणा मथ सर्वेषां मूले न्यस्तकरो भवेत्।
आयुधानि समादाय तथासुच्य विभूषणम्।
धर्मध्वज स्तथा स्पृष्ट्वा प्रविश्य च तथाऽऽश्रमम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि तु।
उपविश्य च मध्यायां स्पर्शयित्वा करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु च पठेद् द्रव्याणि तु पृथक् पृथक्॥
प्रतिग्रहं द्विजश्रेष्ठ! तथैवान्त भवन्ति ते।
द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणाक्षरः॥
वाचयेज्जलमादाय ओङ्कारेण प्रतिग्रहम्।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥
सद्रव्यसोऽन्यसंयुक्तो नरकं प्रतिपद्यते।
अथापि वक्ष्यामि विधिं विशेषं वाजिदानतः॥
दात्यश्वीलोरपि येन पुण्यं स्वर्गाय जायेत न्यायुध्यमेतत्।
दह्नीत योऽश्वं विधिवद्विजेन्द्रः कुर्य्यादसौ पञ्चदिनानि पूर्वम्॥
श्वोपचारैर्युतविष्णुपूजां कुर्य्याच्च तमन्त्रैरष्टतद्ध्यहोम।
द्राम इत्यादि मवजतीयं सोङ्कारभूरादिभिरन्वितं च॥
त्येकमष्टौ जुहुयाद्द्विजाग्र्याः! तदा तथामानसयेद्विजेन्द्राः!।
र्येण मन्त्रेण च तद्दृष्टौ पश्चा प्रयुक्तं नियतं जुहोति॥
र्याञ्च गायत्र्यजपं सहस्रं पश्चात्प्रमृष्टाश्वं सुरगं द्विजेन्द्रः।
तापि चैतद्व्रतमाविदध्याद्द्विजाग्र्यवत्प्राज्ञनयोर्विशुद्धौ।
वपथम् सूर्य्यं जलं लभेते यथापि पूज्यौ द्विजवृन्दमध्ये॥

अश्वप्रतिग्रहविधिः।

पुराणगीता स्तु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय।
तिथौ प्रदत्तं द्विज! यत्र पूर्व ममेण चैतं पुनरुच्यतां तु॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज!।
गोप्रदानेन गोविन्दो वन्द्यत्येतज्जनीषिणः॥

पक्षे शुक्ले तथा वत्स! द्वादश्यां घृतधेनुकाम्।
घृतार्चिः प्रयतात्मा प्रदद्यात् फलदायिनीम्॥
तथैव माघद्वादश्यां प्रदत्ता तिलगौर्द्विज!।
केशवं प्रीणयन्त्याशु सर्वान् कामान् प्रयच्छति।
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्।
दत्त्वा विप्राय विधिना प्रीणयत्यच्युतायिनम्॥
यत्र वा तत्र वा काले यदा तदा प्रदीयते।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम्॥
विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते।
भवेत्तदक्षयं दानं उक्तमल्पाक्षरैरिदम्॥
काले पात्रे तथा देशधनं न्यायार्जितं तथा।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम्॥
चन्द्रे वा यदिवा सूर्य्ये दृष्टे राहौ महाग्रहे।
यत्पूर्वं कथितं सर्वं तदप्यर्के विशिष्यते।
द्वादशी पुण्यशुक्लासु विशेषाच्छ्रावणेन तु॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम!।
वैशाखे शुक्लपक्षे तु विशेषादपि मानवः॥
आषाढी कार्त्तिकी चैव फाल्गुणी तु विशेषतः।
तिस्रश्चैताः पौर्णमास्यो दाने विप्र! महाफलाः॥
व्यतीपातेषु सर्वेषु समस्तेषु द्विजोत्तम!।
ग्रहसंक्रमकाले तु तीव्रदर्शे विशेषतः॥
तुला मेषप्रयाणेषु योगेषु मिथुनस्य च।
रवेर्महाफलं दानमल्पेभ्योऽपि स्यान्महाफलम्॥
यदा प्रविशति भानु र्मकरं द्विजसत्तम!।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम्।
मिथुनञ्च तथा कन्यां धन्विनां मीनमेव च॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम!।
षड़शीतिमुखं नाम दाने दिनचतुष्टयम्॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम!।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्त्तितम्॥
एताश्च विविधाः प्रोक्ताः खाश्च कार्य्या यथोदितम्।
सर्वास्वपिहि सद्भिरित्थं धर्मं समभीप्सुभिः॥
सत्यञ्च नैधिद्विज नालकश्चि मिह्यर्थमुक्तानि कियन्ति विप्राः!।
दानानि वक्ष्याम्यथ पूर्त्तधर्मं माघेन पुंसोर्विहितेन धर्मः।
ब्रह्मेशहरिसूर्य्याणां स्कन्दे भास्याश्विने तथा।
ईशदुर्गाग्रहाणाञ्च गृहाणि कारयेन्नरः॥
इष्टकामशतं वापि यश्चार्पयति विष्णवे।
अनेन विधिना कुर्यात् विष्णुलोक मवाप्नुयात्॥
एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः।
स याति वैष्णवं लोकं परितुष्टो हरिर्नरः॥
समाचरति यो भग्नं सुधया लेपयेद्यथा।
शुभ्रं पतिश्च यस्तत्तु विशिष्टे देवलेपनैः॥
सम्मार्जयति यस्तत्तु यथाचैवानुलेपयेत्।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम्॥
पूजयेद्यस्तु विधिना पञ्चोपचारसंयुतः।
स विष्णुलोकमभ्येति क्रीड़ते च चतुर्भुजे॥
यावत्तत् श्रेष्ठिकास्तत्र वित्तदेवस्य सद्मनि।

तावन्त्यब्दसहस्राणि विष्णुलोकं समाविशेत् ॥
स नित्यस्तत्तडाकानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च स्वर्गमेधिभिः ॥
खातमात्रञ्च कर्त्तव्यं एकादिकजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृप्ती भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्ता अम्भसामिव ।
गण्डूषानि तु तावन्ति तत्कर्ता तत्सुमन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषानि क्रमात्तु च ।
कुर्वतां स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गं सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभवृक्षैः सुशोभितैः ।
अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधनीवरैः ॥
जम्बुनिम्बकदम्बैश्च खर्ज्जूरैर्नारिकेलकैः ।
वकुलैश्चम्पकैर्वृक्षैः पाटलाशोककिंशुकैः ।
द्रुमैर्नानाविधैरन्यैः फलपुष्पोपयोगिभिः ॥
जातीजपादिपुष्पैस्तु शोभिताश्च समन्ततः ।
फलोपयोगिनः सर्वे तथा पुष्पोपयोगिनः ॥
आरामेषु च कर्त्तव्याः पितृदेवोपयोगदाः ।
गाथामुदाहरन्त्यत्र तद्विदः कवयोऽपरे ॥
वृक्षारोपणकं पुंसा मुक्ता याः पुण्यवाचकाः ।
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशचिञ्चिणीश्च
षट् चम्पकं तालशतत्रयं च पञ्चाम्रवृक्षैर्नरकं न पश्

यावन्ति खादन्ति फलानि वृक्षाः सुदङ्क्रिदग्धस्य तु मन्नणोषाम् ।
वर्षाणि तावन्ति वसन्ति नाके इच्छोषकल्पपुरुषाः खमरौघसेव्याः ॥
पुष्पाणि यान्ति च पुष्पिणातु दिवौकसां मूर्ध्नि धरातले वा ।
पतन्ति तावन्ति च वत्सराणां कल्पाणि वृक्षैर्दिवमारुहन्ति ॥
फलालपत्रै मधुरैरसञ्च शाखाच्युतैः स्वादुफलैर्नगाद्याः ।
सर्वाणि सत्वानि समर्पयस्व तत्श्राद्धदानेनच वृत्तनाथान् ॥
उद्दिश्य विष्णुं जगतामधीशं नारायणं यत्पुरुषः करोति ।
आनन्त्यमाप्नोति कृतं तु तस्मादनन्ततोयं भगवान् पुराणः ॥
दानानि सर्वाण्यभिधाय विद्वन् ! नष्टञ्च पूर्तं गृहमेधिकर्म ।
कुर्वन्ति शान्तिं मनुजाः शुभाय वक्ष्यामि तत्स्यादयमर्वशान्त्यै ॥
उक्तानि सर्वदानानि इष्टापूर्तञ्च सत्तमाः ! ।
अतःपरं प्रवक्ष्यामि गणेशादिशान्तयः ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां
धर्मसंहितायां दानधर्मेषु पूर्त्तविनिर्णयो
नामाष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ।

शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता ।
ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते ॥
यदि पुण्यकृतकर्माणि भवन्ति फलदानि हि ।
तदा धर्मार्थकामास्तु संसिध्येरन् सदा नृणाम् ॥
तन्नृभिः क्रियमाणानां सर्वेषां कर्मणामयम् ।
विघ्नार्थमसृजद्ब्रह्मा शङ्करस्य विनायकम् ॥

तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं कृतम्।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥
जलावगाहनं स्वेन क्रव्यादारोहणं तथा।
खरोष्ट्रम्लेच्छसंसर्गं गुड़काषाययवाससम्॥
पश्यत्यात्मानमेवेह सीदन्तं प्रतिवासरम्।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि।
राजपुत्रो न राज्याप्ता यद्याप्ता न तु कन्यका।
अन्तर्वत्नीन्यपत्याप्ता आचार्यं तु न सा द्विज!॥
अधीयानास्तु विद्याप्ता कृषिकृत्सस्यसम्पदा।
वणिग्वर्त्तन लाभेन युज्यन्ते तद्वतश्च सन्॥
तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम्।
स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥
स्वासनासीन संस्नाप्य आरक्तार्षभचर्मणि।
सितसर्षपकल्केन साज्येनाच्छादितस्य च॥
विलिप्तशिरसस्तस्य गन्धैः सर्वैस्तथौषधैः।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥
एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम्।
समानीतं क्षिपेत्तत्र वक्ष्यमाणमृदस्त्विमाः॥
अश्वेभस्थानवल्मीके ह्रदसङ्गममृत्तिका।
रोचनां गुग्गुलं गन्धान् तस्मिन्नम्भसि तान् क्षिपेत्॥
यत्तै द्वैपायनं स्नानं सहस्राक्ष मृषिस्मृतम्।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥
ऋचाभिः पावमानीभिः कुम्भान्तमभिमन्त्रयेत्।
शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः॥

चापस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा ।
सुचिविधान इत्यादौ मन्त्रैर्नैकाभिषेचनम् ॥
वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये ।
समुद्रा गिरयो नद्यो मुनयश्च पवित्रता ॥
दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा ।
पादङ्गुष्ठोरुजङ्घाश्च नितम्बोदरनाभिषु ॥
स्तनांसे बाहुहस्ताग्रग्रीवा चांसाङ्गसन्धिषु ।
नासा ललाटे कर्णभ्रू केशान्तेषु च यत्स्थितम् ॥
तदपो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा ।
स्नातस्य मस्तके दर्भान् सव्येन परिरक्ष्यते ॥
जुहुयात्सर्षपस्तैलमौदुम्बरस्रुवेण तत् ।
मितश्च संमितश्चैव तथा सालकटङ्कटौ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः ।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः ॥
चतुष्पथं समाश्रित्य सूर्ये कृत्वा कुशांस्ततः ।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान् ॥
ओदनं पललोपेतं मत्स्यामान् मत्स्यकानपि ।
तथा मांसञ्च कुल्माषान् तत्रैव त्रिविधां सुराम् ।
हरिकेल्लेरिकाम् पूपान् फलानि मूलसंस्रजः ॥
गच्छेत् स मातुः पार्वत्याः कुर्यादुपस्थितं पुनः ।
दूर्वासर्षपपुष्पैश्च पूर्णामार्घाञ्जलिं क्षिपेत् ॥
सौभाग्य मल्लिके ! देहि भगरूपं यशोऽपि च ।
श्रियो पुत्रांश्च कामांश्च तथा शौर्यञ्च देहि मे ॥
गणेशमात ! रम्भाले ! यत्किञ्चिन्मदभीप्सितम् ।

एतच्छ्राद्धे ! च तद्देहि देहि गौरि ! वरान् वरान् ॥
अनन्तु वाससी शुक्ले परिधायाथ ते शुभे ।
सितचन्दनलिप्ताङ्गः सितस्रग्भूषणान्वितः ॥
तान् नत्वाथ द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेतु तस्य वराशिषः ॥
एतानि सम्पूज्य गणाधिदेवं विघ्नोपशान्त्यै जननी तथास्य ।
आर्त्तोक्तसम्यग्विधिना समासात्प्राप्नोति चान्यान्मनसा यमिच्छेत्
स्नात्वा विधायार्चन मम्बिकाया: सम्पूज्य लोकान् सखिवन्धुलोकान्
आचार्यद्दृष्टान्वनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥
कृत्युक्तमन्त्रैर्विधिवत्स युक्तै र्नित्यं द्विजानन्दनपूजनं च ।
कृतान्तरायान्विनिहत्य सर्वान् कुर्यादथातो ग्रहयागमेनम् ॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा ॥

---

मुनीनां व्यासमुख्यानां शुश्रूषानुपुरोऽब्रवीत् ।
शुभाय ग्रहपूजायां वदतस्तानि बोधत ॥
यद्वर्णा यत्सुताश्चित्ताम् जाता देशेषु येषु च ।
तेषां तदधिदैवत्यं सन्निधौ दक्षिणाय च ॥
यस्य यस्य च दिग्भागे मण्डलं स्याद्विवस्वतः ।
होमकर्मणि यो विप्रो या सन्ध्या समिधावपि ।
अग्निकुण्डप्रमाणन्तु प्रमाणं समिधामपि ॥
सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम ! ।
रक्तः काश्यपजो भानुः शुक्लो मत्स्यसुतः शशी ॥
रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः ।

पीतौ ब्रह्मा सुराचार्यः शुक्लः शुक्रो जगद्गुरुः ॥
कृष्णः शनीरवेः पुत्रः कृष्णो राहुः प्रजापतिः ।
कृष्णः केतुः कृष्णाश्च कृष्णपापाश्रयोऽप्यमी ॥
कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते ।
मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः ॥
सैंधवोदानवाचार्यसौरिसौराष्ट्रदेशजः ।
राहुशक्तदेशोत्थो मध्यदेशभवोऽग्निभूः ॥
जन्मदेश इमे प्रोक्ताः ग्रहजातक वेत्तृभिः ।
शम्भुं रविं पुमान् चन्द्रं स्कन्दभौमं हरिं बुधम् ॥
ब्राह्मणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम् ।
कालं राहुं चित्रगुप्तं केतु मित्यधिदैवतम् ॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत् ।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रशाशनः ॥
सुधामुचे च सोमाय पालाशः सर्वकामिकः ।
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ॥
स्वरूपकदपामार्गो होतव्यश्च बुधाय च ।
प्रभाप्रदस्त्वश्वत्थो होतव्योऽमरमन्त्रिणे ॥
शमी सौभाग्यहृद्या दैत्यामात्याय सद्‌द्विज ! ।
धर्मविद्यार्थहृद्भोन् स द्विजे वह्निसूनवे ॥
दधिक्षीराज्यसंमिश्राः समिधः शुभहृद्वये ।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ॥
दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज ! ।
प्रादेशमात्रका सर्वा अष्टा वष्टोत्तरं शतम् ॥
अष्टाविंशतिरेकैकं सङ्ख्यया प्रतिदैवतम् ।

दद्यात्तु जलभूयश्च सुताद्रक्षत राक्षसम् ॥
नव भुवनकं लेख्यं चतस्रं मण्डलं द्विज ! ।
ग्रहांश्च प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु ।
मध्ये तु भास्करः स्थाप्य पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनुः बुधः पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान् ॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः ।
सोमसूनु सुराचार्य्यौ स्वर्णशोभौ प्रकीर्तितौ ॥
रजतो भृगुपुत्रस्य कार्ष्णश्च स शनैश्चरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः ॥
सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा गृही ।
लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा ॥
ग्रहाणां साधिदेवानां प्रतिष्ठापनमन्त्रकान् ।
वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम ! ॥
आदित्यं गर्भमित्यृक्त मग्निं दूतमनेन वा ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम् ॥
अप्स्वन्तरीति शीतांशुः श्रीश्च त इति पार्वती ।
स्योना पृथ्वीति भौमश्च य इन्द्रं देति वा गुहम् ॥
इदं विष्णुः बुधः स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र आसां सुराचार्य्य ब्रह्मणां निबोधकम् ॥
इन्द्र देवी भगोः सूनु सर्वाघेत्यपराधि-म् ।

शन्नो देवी रवेः सूनुं यमाय त्वा तथा यमम् ॥
अयं गौरिति राहुश्च कालं कार्षीरसीति च।
अग्निर्जज्ञेति केतुश्च चित्रं चित्रावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे।
आकृष्टेन च तीव्रांशोरिमन्देवा निशाकरम् ॥
अग्निर्मूर्धेति भूसुनोरुद्बुध्यस्व बुधस्य च।
बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनैर्गन्तुः काण्डात् काण्डात्परस्य च।
केतुं कृण्वनग्निसूनुरयमंशः प्रकीर्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना तु द्विजन्मना।
कर्त्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः।
मध्यमानामिकामूललग्नाङ्गुष्ठं चतसृभिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा स्तिला स्तावत्तवाहुतिम्।
हस्तमात्रं पृथिव्या न वेधोऽपि तावतैव तु ॥
बाहुमात्रं वदन्त्येके एके चारत्निमात्रकम्।
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम्।
होमार्थं मण्डलं कुर्य्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः।
तथा तत्तोदकुम्भाश्च दूर्वापल्लवसंयुताः ॥
पुनर्नवीकृतं पद्मं मण्डपाभावमाश्रयेत्।
षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः
प्रतिग्रहा निदग्धस्य जपहोमादि कुर्वतः ॥
यस्य मन्त्राश्च वीर्याणि तत्कृतं कर्म निष्फलम् ।
ओदनं सगुडं भानोः पायसं शशिन स्तथा ॥
हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च ।
पूर्णां हविः शनैः केतो र्माषं राहोः घृतान्नतम् ॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः ।
होमं कृतस्तथान्येऽपि सदृष्टन्ताय द्विजाग्रजाः ॥
यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाश्च सर्वेषां देयो धूपश्च गुग्गुलः ॥
धेनुः शङ्खो वृषः स्वर्गं वासोऽश्वश्चासिता च गौः ।
आविस्छागलकश्चैव क्रमशो दक्षिणाः स्मृताः ॥
प्रत्यक्षं प्रतिमासञ्च प्रत्यब्दं वा विधानतः ।
वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि ॥
दुःखितो यस्य यस्तु स्यात् पूज्यस्तस्य स यत्नतः ।
वेधसैते नियुक्ताः प्राक् स्वभक्तं पूजयिष्यथ ॥
वरं ददाति संहृष्टा विप्रा अग्नि र्नृपा ग्रहाः ।
असन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीन मिदं सर्वं उत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः ॥
सानुकूलै र्ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणा मातिथ्यमब्दं प्रतिवासरं ये

आरोग्यदेशा धनधान्ययुक्ताः दीर्घायुषः स्त्रीशतगा भवन्ति ॥

इति श्रीवृद्धपाराशरीये धर्मशास्त्रे ग्रहशान्तिर्नाम शान्त्यध्यायः ।



वसेन्न कस्मात्सदनेष्वतोऽद्भुतं वयोवसेयुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकससकाकवायसाः ॥

तरक्षुगोमायुखगायुगोभि-
र्हिंसाप्यकस्मादकुतोऽपि निर्भयः ।
विशन्ति यत्त्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छनिकृते हि सिद्धये ॥

अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा ॥
भयश्चा जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखाश्च देवसर्वाशनेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गस्तु मुख्ये स्यात् अरुगवृष्टिर्भवेद्यदि ॥
अम्भः पूर्णे तु कुम्भेतु ज्वलदग्निमवेक्षते ।
उद्वपनन्तु कूपानां मन्तो वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
महावाताय वाताय तद्वदयं प्रशास्यतु ।

त्रिपञ्चसप्त वा कृत्वा सर्वत्र स्याच्च तुल्यता॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च पाण्डकौ।
द्वौ द्वावाशु प्रजायेते तत्र शान्तिर्विधीयते॥
वृषवन्नोहयं नर्देत् वडवाश्ववदाहरेत्।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च॥
मृदङ्गपटहादीनामकुतोऽपि ध्वनिर्यदा।
काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं वरम्।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम्॥
महावरुणदेवाय स्यपाञ्च पतये तथा।
अन्यैर्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम्॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम्।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः॥
इन्द्रचापेक्षणं रात्रौ शस्त्रप्रज्वलनन्तथा।
गजस्य शफस्थान्तज्ज्वलनं प्रतिवीक्षणम्॥
स्थूणाप्ररोहणं यत् स्याद्भाण्डस्थानप्ररोहणम्।
विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि॥
मृदाकुङ्काकसंसर्गं विपरीतप्रदर्शनम्।
शुभाय चरुराग्नेयो निर्वाप्यो विधिवद्द्विजैः॥
अग्नये त्वग्निराजाय महावैश्वानराय च।
हृदये मम यस्त्वेतत्सर्वत्र च वदेद्बुधः॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च।
दक्षिणा सहृषा गौस्तु वस्त्रयुग्मं द्विजायते।

एतेषु चान्येष्वपि चाद्भुतेषु जातेषु सावित्रजपं सहस्रम् ।
होमं विदध्यादपि विष्णुमन्त्रै र्ब्रह्मेशमन्त्रैरपिवा द्विजोत्तमैः॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः ।

---

अभिधास्येऽथ रुद्राणां शान्तये गृहमेधिनाम् ।
यज्ञानाञ्च विधानन्तु यत्कृतं हन्ति पातकम् ॥
ब्राह्मणा विधिवत् स्नात्वा सर्वोपद्रवनाशनम् ।
कुर्युर्विधानं रुद्राणां यजुर्विधाननिर्मितम् ॥
इषेत्वादिषु मन्त्रेषु खं ब्रह्म तेषु या क्रिया ।
दशप्रणवयुक्तेषु भूर्भुवःस्वरितीति च ॥
आर्षञ्छन्दश्च दैवत्यं न्यासश्च विनियोगतः ।
पराशरोदितं वच्मि शेषं मुनिविभाषितम् ॥
मनोज्योतिरबोध्याग्निमूर्धानञ्च मर्माणि ते ।
मानस्तोक इतिह्येतत्प्रथमं पञ्चकं स्मरेत् ॥
याते रुद्रेति च आयाशिरोऽस्मिन्महदर्णवे ।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः ॥
चक्षुषोर्विन्यसेद्धेतु त्र्यम्बकञ्च यजामहे ।
मानस्तोक इति ह्येतन्नासिकायां न्यसेद्बुधः ॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले ।
नस आयुध इत्येतत्स्मरे मन्त्रप्रकोष्ठके ॥
विन्यसेद्दासुमन्त्रोऽयं ये तीर्थानिति हस्तयोः ।
नमोऽस्तु किरिकेभ्यो वै हृदये मलनाशनम् ॥
ताभ्यां विद्वान् न्यसेत् पार्श्वे नमो हिरण्यबाहवे ।

गन्धमन्त्रस्तु संस्थाप्य इमा रुद्राय इत्यपि ॥
मानो महान्तइत्योर्वो एष ते रुद्रेतिजानुनोः।
अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमेतद्वै तदुपरिस्थित इति।
नेत्रन्तु नीलग्रीवाय प्रमुञ्चन् मनोऽस्त्रकम् ॥
य एतावन्त एतेन विदध्युर्दिक् प्रबन्धनम्।
ॐमितिच नमस्कारभवा च ते ततः पुनः ॥
रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत्।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यतः।
गकारं कण्ठदेशेतु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत्।
द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत्॥
त्रातारमिन्द्रं त्वन्ताग्ने सुगन्धः पथ्यानमिति ह्यपि।
तत्त्वा यामि वदेदानो नियुद्भिरित्यपीरयेत् ॥
वयं सोम तमीशानं अस्मैरुद्रा इति स्मरेत्।
स्योना पृथिवी ह्येतत् कुर्वीत संपुटं द्विजः।
सुत्रामादिदिशांपालान् प्राच्यादिषु स्मरेदथ॥
रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते।
यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः ॥
दुष्टदैत्याश्च शाकिन्यो रेवत्यो वृकाश्च याः।
सिंहव्याघ्रादयोऽरण्या ये दुष्टश्वापदश्च निजाः ॥
म्लेच्छवञ्चकचोराद्या यमदूतश्च दारुकाः।
रौद्रभूतमिमं सर्वे दृष्ट्वा पश्यन्ति वह्निवत् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्वधकारकः ।
दह्यमानो दवीयः सु मन्नधामसु धामभिः ॥
प्रणश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः ।
पश्चात्स्यसौम्यमात्मानं सर्वाभरणभूषितम् ॥
मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम् ।
फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम् ॥
सप्तार्चिषं ज्वलज्ज्वालं जटाजूटकिरीटिनम् ।
सहस्रकरपादाब्जखट्वाङ्गाङ्गविभूषितम् ॥
ब्रह्माण्डखाण्डवक्तारं नृकपालकधारिणम् ।
देदीप्यमानचन्द्रार्कज्वलदग्निविनेत्रिणम् ॥
त्रैलोक्यज्योतिः कङ्कास्वत्स्कन्धकपालमालिनम् ।
दीप्तनचत्रमालाभदन्तमल्लाधरद्विजः ॥
निःशेषवारिसम्पूर्णां कमण्डलुधरं ध्वजम् ।
जगत्त्र्याधियकत्राददण्डमेककधारिणम् ॥
केयूरबद्धनागेन्द्रमूर्धमणि विराजितम् ।
विचित्र किङ्किणीं मालां मुक्तारावविराजितम् ॥
घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् ।
सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम् ॥
विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम् ।
समस्त भुवनाभाव धरणोच्छासनस्थितम् ॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धञ्च पार्वतीम् ।
लक्षसूर्यप्रभाभास्वत् त्रैलोक्यकृतपाण्डुरम् ॥
अमृतप्लुत हृष्टाङ्गं दिव्यभोगसमाकुलम् ।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम् ।

नित्यं शाश्वत मव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥
द्विजो ध्यात्वा भवात्मनं सम्यक् ग्रहस्वरूपिणाम् ।
सप्तपद्यस्तान्तराय: सन्ततोयजनमारभेत् ॥
अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके ।
स्थण्डिलाब्जमालिख्य मन्त्रै प्रक्षाल्य तं पुनः ॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च ।
मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विजः ।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः ।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुनः ॥
त्र्यामन्त्रैश्च सोङ्कारैर्मानस्तोक इति त्वपि ।
शम्भवे इति मन्त्रेण दद्यान्नन्वोदकादिकम् ॥
पुष्पधूपश्च दीपादि यथालाभं निवेदिकम् ।
दशाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः ॥
शिखा तस्य तु रुद्रस्योत्तरनारायणं द्विजः ।
शिरः पुरुषसूक्तञ्च शिवसङ्कल्पहृद्यकृत् ॥
कवचञ्चाप्रतिरय नेत्रविभ्राट् हहत्यिवन् ।
शतरुद्रीयमन्त्रेण देवस्यास्त्रं प्रकल्पयेत् ॥
पञ्चाङ्गानि स्मरेद्दृष्टप्रणवं पूजयेद्द्विजः ।
उद्धृत्य प्रणवेनैशं विकिरन्द्रेति विसर्जयेत् ॥
रुद्ररूपो द्विजो यश्च कुर्यात्तद्विच सिध्यति ।
अक्षताम्वा तिलाम्वापि यवाम्वा समिधोऽपि वा ॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान् ।
पञ्चपञ्चाथ षड्वाथ अष्टावष्टौ तथापि च ॥
दशदशैकादश वा जुहुयात्साधको द्विजः ।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः ॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत् ।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः ॥
सौवर्णं पृथिवीदान पुण्यभावः प्रजायते ।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति ॥
एकादशगणान् रुद्रानावर्त्यं याति रुद्रताम् ।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः श्राद्धभुग्वरः ॥
वंशानां विंशतिश्चैकान्तारयेद्रुद्रजाप्यकृत् ।
एकतो योगिनः सर्वे ज्ञातिभिः सह सद्व्रतैः ॥
एकतो रुद्रजापी तु मान्यः सर्वैश्च दैवतैः ।
पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः ॥
तस्मै दत्तं कृतम्भुक्तन्तदानन्त्याय कल्प्यते ।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः ॥
गोमूत्रयावकक्षीर दधिशाकान्न भोजनः ।
हविष्यभोजनो वास्मै विप्रायोत्पन्नभोजनः ॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत् ।
शिरः साहस्र रुद्राणां जप्तैर्दशशतैर्ध्रुवम् ॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः ।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः ॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः ।
एकादशशुभान् कुम्भान्वाहृत्य विधिमन्त्रितान् ॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान् ।
गन्धोदकाक्षतैर्युक्तान्नमस्कृत्वाऽभिमन्त्र्य च ।
एकादशमहात्मान मन्यं वा हितकाम्यया ।

विनायकोपसृष्टञ्च स्थापयेत् का पदाहतम् ॥
मृतवत्सां काकवन्ध्यां स्नापयेच्च तथातुराम् ।
जपन्नेतत्सकृद्विप्रः सर्वदोषैर्विमुच्यते ॥
अनड्वाहञ्च वस्त्रञ्च दद्याद्धेनुञ्च दक्षिणाम् ।
भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः ॥
भक्ष्यैश्चादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत् ।
अथवा चतुभिः मासौ शिरो रुद्रसहस्रकम् ॥
जपेद्गृहे तथारण्ये क्षित्रे च शिवालये ।
अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते ॥
जपेदन्यत्र वा विद्वान् शुचौ देशे मनोरमे ।
धीरो दृढव्रतो मौनी जितक्रोधो जितेन्द्रियः ॥
श्वेतवासास्त्वधःशायी रुद्रलोके महीयते ।
नमो गणेभ्य इत्यस्य मन्त्रस्य ब्राह्मणोऽयुतम् ।
जप्त्वा च श्रीफले हुत्वा सर्वकार्य्ये तु सिद्धिभाक् ।
नमोऽस्तु नीलग्रीवायेत्येतन्मन्त्रेण सप्तधा ॥
आवर्त्त्योदकमामन्त्र्य विषार्त्तश्रवणे जपेत् ।
विषेण मुच्यते सद्यः काकदष्टोऽपि जीवति ॥
विषस्यापि भवेन्न स्यात्तस्य नरस्य कर्हिचित् ।
ग्रहग्रस्तं ज्वरग्रस्तं रक्षःशाकिनि दूषितम् ॥
ब्रह्मराक्षसग्रस्तञ्च अन्यदोषोपहिंसितम् ।
प्रमुञ्चन् धन्विन इति भस्मना सर्षपैस्तथा ।
ताडयेन्मुञ्च मुञ्चेति शीघ्रमेव विमुञ्चति ॥
नमः शम्भव इत्यस्य मन्त्रस्यापशुभं द्विजः ।
जप्त्वा खादिरसमिद्भाश्च हुत्वा विप्रः सहस्रकम्

तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते भोचनम् ---म् ।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत् ॥
जलमध्ये शतावर्त्यां सद्योवृष्टिर्निगद्यते ॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम् ।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भृशम् ॥
नमः स्वभ्य इत्यनेन मन्त्रेण तु सहस्रकम् ।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत् ॥
द्विगुणाम्पलाशसमिधं महावाणी प्रजायते ।
त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम् ॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते ।
समुद्रगा नदीतीरे पुलिने वा पवित्रके ॥
खड्गोपरि श्रीफलानां हुत्वा त्रिगुणसहस्रकम् ।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः ॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये ।
ज्ञानेन कर्मसम्पत्त्वं द्विजानां येन जायते ॥
आद्यानुवाके रुद्राणां आद्यायाश्च ऋचिद्विजः ।
छन्दोगायत्र्यमन्यास्तु अनुष्टुप्तिसृषु स्मरेत् ॥
पङ्क्तिस्तिसृषु विज्ञेया अनुष्टुप् तिसृषु स्मृताः ।
द्वयोश्च जगती विप्र उक्तमद्यानुवाककम् ॥
आद्यानुवाके प्रथमा बृहती जगती तथा ।
अनुष्टुप्च तृतीयायां द्वयोस्त्रि ष्टुप् स्मृता द्विज ! ॥
अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम् ।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः ॥
यज्जाग्रतादि षट्केच शिवसंकल्पमार्षकम् ।

रुद्रस्तु देवता षट्सु विनियोगो जपादिषु ॥
अद्भ्यः सम्भृत इत्यादौ उत्तरनारायणऋषिः ।
पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम् ॥
आशुः शिशान इत्यादिरप्रीतिरथ उच्यते ।
एतन्नाम्ना मुनिस्तत्र देवतारामरेश्वरः ॥
दैवत्यमापतेत् स्यात छन्दस्त्रिष्टुप् प्रकीर्तितः ।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सञ्चिन्त्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् ।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यन्तितृणां आधानान्द्रविणस्य च ।
प्रजानामायुषः कीर्तिभूयस्त्वं रुद्रजापिनः ॥
इमं पुण्यं पवित्रञ्च रहस्यं पापनाशनम् ।
रुद्रविधिं विधिश्रेष्ठ ! कुर्याद्विप्रः शिवे रतः ॥
कुर्याद्य एवं विधिवद्विधानं शम्भोरजस्रम्प्रयितं द्विजेन्द्राः ।
प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववत्सुपः
मन्त्राणि सर्वाणि च स द्विजस्य आदेशकर्तॄणि भवन्ति य
यः साधयेत्प्रोक्तविधानयत्नो मन्त्राभिपूज्यः स तु शम्भुवत्स्यात्
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्त

---

मन्त्रस्त्रिनेत्रं जुहुयाद्धुताशे यो बिल्वपत्रैर्घृतदुग्धयुक्तैः ।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमे
पञ्चभागास्तथा पञ्च पञ्चेन्द्राः पञ्चवारुणम् ।
पञ्चाहुतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम्।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥
अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्तितः॥
दीर्घिकासु तटागेषु सन्निहितासु यो विधिः।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥
तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते॥
तटागादिनिपातनां यावदुत्सर्जनं कृतम्॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम्।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥
अप्रतिष्ठितपद्मानां प्रोक्तन्तोयमपेयवत्।
तदुत्सर्गः प्रवर्तव्यो निजवित्तानुसारतः॥
वित्तशाठ्यं प्रकुर्वंश्च स्यादित्यब्रवीत्पराशरः।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह।
सतोयं स तु कर्तव्यः प्रतिधर्मविदङ्घ्रये॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्।
तटाकपालिपृष्ठेतु मण्डपं तत्र कारयेत्॥
पूर्वोत्तरद्रवे देशे शुभे शौचसमाहितः।
चतुरस्रं चतुर्द्वारं दशहस्तप्रमाणतः॥
सार्धहस्तप्रमाणेन तोरणानि तु कारयेत्।
कार्याः विचित्राः पताका नानावर्णाः समन्ततः॥

शुभपल्लवसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च॥
वैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्यात्कण्ठं क्षत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोमं कुवेर कुविदङ्गतम्॥
धनदं धननागेति ईशावास्येति शङ्करम्।
आकृष्णेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्पास्तथा ग्रहाः॥
त्रातारमिन्द्रमितीन्द्रं अग्निदं ते च पावकम्।
अग्निमूर्धेत्यादि धर्मविच्च द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णुं नमः सूर्येति नैऋतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा विंशतिः स्थाना निमन्त्रिताः पृथक् पृथक्॥
इमं मे त्वन्नमत्वन स्नात्वायामि ह्यनुत्तमम्।
समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति ह्यसि॥
दशवारुणमन्त्रैस्तु आहुतीनां शतद्वयम्।
अयुतं शतं वापि विंशमष्टोत्तरं शतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
अलाभे चैव गां दद्यादेकामपि पयस्विनीम्॥

अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्।
सौवर्णा राजतास्ताम्राः कांस्याः सीसाश्च शक्तितः॥
मत्स्यनक्रादयः कार्य्या विविधाः पूर्वकल्पये।
गोवत्सौ वस्त्रबद्धौ च आग्नेय्यां दिशि संस्थितौ॥
वायव्यभिमुखौ तत्र तारयेद्वारिमध्यतः।
वस्त्रयुग्मानि तिः स्थाप्य छत्रिकामुद्रिकां शुभाम्॥
शक्त्यान्वितैः प्रदातव्यं विप्रान् प्रसाद्य भक्तितः।
दद्याद्विप्रेभ्यः सन्तोष्य छत्रोपानहमेव च॥
सुहेम पुष्पसंयुक्तां शय्यां दद्याच्च शक्तितः।
आसनानि च शस्तानि भाजनानि निवेदयेत्॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः।
प्रसादयेद्द्विजान् भक्त्या इष्टापूर्त्तं फलं नरः॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः।
ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रवपुर्धराः॥
तद्यूयन्तारयध्वं मां संसारार्णवतो द्विजाः!॥
आगता मम पुण्येन पूर्वपुण्यप्रसाधकाः।
कूर्मश्च मकरांश्चैव सौवर्णां तत्र कारयेत्॥
मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः।
जलकुम्भचराद्यांश्च सैन्धवांस्तत्र प्रकल्पयेत्।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत्॥
इमं पुण्यं पवित्रञ्च तटाकादिविधिं नरः।
खातयित्वा तटागानि स्वभावात् सत्त्ववर्जिताः॥
मानवः क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश।
एतद्विधानं विदधाति भक्त्या सर्वेषु खातेषु तड़ागकेषु।

सर्वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान् ॥
वदन्ति केचिद् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुम्भे ।
संपूज्यतां तत्र पुनर्धरित्र्यां नरेन्द्रतामेति पराशरोक्तिः ॥

इति श्रीबृहत्पाराशरीये शान्त्यध्याये वापीकूपतडागादि शान्तिविधिः समाप्तः ।

---

अथातः सम्प्रवक्ष्यामि नरेन्द्राः ! श्रूयतामयम् ।
लक्षहोमविधिः पुण्यः कोटिहोमविधि स्तथा ॥
स्वयम्भूर्यमुवाच प्राक् ब्रह्मतातपितामहः ।
तमिमं संप्रवक्ष्यामि श्रूयतां पापनाशनम् ॥
ये चेह ब्राह्मणाः कार्य्याः भूमिर्यावन्तु मण्डपम् ।
समिधो याश्च मन्त्राश्च अन्यच्च तत्र यद्भवेत् ॥
लक्षहोमविधिं विप्राः ! कथ्यमानं निबोधत ।
युग्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः ॥
नियमव्रतसम्पन्ना मर्चिताः पार्थिवेन तु ।
नित्यं जपपराश्चैव नियोज्यास्तादृशा द्विजाः ॥
कन्दमूलफलाहाराः दधिक्षीराशिनोऽपि वा ।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिलमेव च ॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम् ।
दक्षिणोत्तर मायामि त्रिंशत्तु पूर्वपश्चिमे ॥
कुण्डानि खनितव्यानि षडङ्गुल्या नैकविंशतिम् ।
निधापयेद्धिरण्यञ्च रत्नानि विविधानि च ॥
सिकता परिदेया च तत्राप्यग्निं समिन्धयेत् ।
आज्यभागाहुतीर्हुत्वा स्व चाहुत्या च संस्मरेत् ॥

अग्निं सोमञ्च सूर्य्यञ्च विष्णुञ्चैव प्रजापतिम्।
विश्वेदेवान् महेन्द्रञ्च मित्रं त्विष्टिमतं तथा॥
दधिमधुघृताक्तानां समिधाश्चैव यज्ञिनाम्।
होमयेच्च सहस्राञ्च तत्र चैव यथाक्रमम्॥
चतुर्विंशति गायत्र्या मानस्तोकेति षड् तथा।
त्रिंशच्छताभिमन्त्रैश्च चत्वारि विष्णुदैवतैः॥
कुष्माण्डैर्जुहुयात्‌षञ्च विकिरेद्वाश षोड़श।
जुहुयाद्दशसहस्राणि जातवेदस इत्यृचे॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः।
कुम्भे शतसहस्रे तु अभिषेकन्तु कारयेत्॥
इन्द्राभिषेकं यत्प्रोक्तं तदुक्तापि शुभप्रदम्॥
अथवा षोड़शं कुम्भैः सच्छिद्रैः समङ्गलैः।
सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः॥
अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः।
हयाश्वरथयानानि भूमिवस्त्रे युगानि च॥
अजञ्च गोशतं हेम ऋत्विजाञ्चैव दक्षिणाम्।
वृषानेकादशैवाथ दश दद्याच्च धेनवः॥
अशक्त्या वा प्रदद्यादुगां वित्तशाठ्यं विवर्जयेत्।
एवं कृते तु यत्किञ्चिद् ग्रहपीड़ासमुद्भवम्॥
भौममाकाशजं वापि असहा यदि जायते।
तत्सर्वं लक्षहोमेन प्रशमं यात्यसंशयम्॥
शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते।
दृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसंक्षयः॥
इति श्रीवृहत्पाराशरीये लक्षहोमविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः ।
श्रूयतामादरेणायं सर्वकामफलप्रदः ॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजो यागकर्मणि ।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये ।
कार्यश्चैव विशेषेण ग्रहयागविधिर्विदः ॥
एकाङ्गविकलो विप्रो धनधान्यापहारकः ।
सर्वाङ्गविकलो यत्तु यजमानं स हिंसति ॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविद्द्विज ।
कार्यश्चैव विशेषेण ग्रहयज्ञश्च विद्द्विजैः ॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः ।
अधोर्ध्वं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम् ॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः ।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः ॥
एवं कृते तु यत्किञ्चिद्दुष्टग्रहपीडासमुद्भवम् ।
तत्सर्वं नाशयेत्येव कृतघ्नः सौहृदं यथा ॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा ।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥
पूर्ववद्ग्रहदेवानामावाहनविसर्जने ।
होममन्त्रास्त एवोक्ताः स्नानदानस्तथैव च ॥
मण्डपश्चैव वेद्याश्च विशेषश्च निबोधत ।
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः ॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ।
षडङ्गुलोद्धृता कार्या च प्रथमा मेखला बुधैः ॥
त्र्यङ्गुलैरुन्नता तद्वद् द्वितीया मेखला स्मृता ।

द्वङ्गे ऽखला या तु तृतीया चतुरङ्गुला ॥
अङ्गुलस्तत्र विस्तारः पूर्वयो रेव शस्यते ।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नतं मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता ।
गजोष्ठसदृशा तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यान्मण्डपश्च चतुर्मुखः ।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदस्तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः ।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः ।
रात्रिसूक्तञ्च सौरञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोऽप्युदङ्मुखम् ।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम् ।
सौवर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं च्छन्दोगं पश्चिमे जपेत् ।
पञ्चभिः सप्तभिर्वापि होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युः सएव द्विजसत्तमाः ॥
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्राणि दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥

प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ।
राष्ट्रं मनोवाञ्छितवृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्य तस्माद्भूयो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् सहस्रलक्षं शतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयं धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोद्भवपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमाच्छेषपापैर्विबुधत्वमेति ॥
तस्मात्तदा भूपतयो विदध्युर्बुद्धीः प्रजासौख्यवतस्य पुष्ट्यै ।
आयुःप्रवृद्ध्यै विजयाय कीर्त्यै लक्षस्वहोमैः ग्रहयागमेतम् ।
इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

अथो अन्यत्प्रवक्ष्यामि विधिस्नापनमुत्तमम् ।
अगस्त्यात्तप्रतातोऽयं रघुपुत्राय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैभाविकं स्वयम् ।
सहस्रशीर्षसूक्तस्य विधानञ्चरुपाककम् ॥

यैः कृतं नृपैः पूर्वैरन्यैरपि द्विजोत्तमैः ।
उपासितन्तु सद्भक्त्या श्रोत्रियैर्वेदपारगैः ॥
आत्मविद्भिर्निराहारैर्व्रीहिभिर्मन्त्रउत्तमैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठान्न धनात् स्नानात् नात्मनः प्रतिपादनात् ।
प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम् ॥
दम्पत्योरुपवासश्च ह्येकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत् पुरुषकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततिक्षमम् ॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून् ।
यः करोति द्रुतं याति स विष्णोः परमं पदम् ॥
कृत्वाज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थशाखाः कृत्वाज्यं जुहुयात् पुनः ॥
उपस्थानं ततः कुर्यात् ध्यात्वाथ मधुसूदनम् ।
हविर्होमं पुनः कृत्वा जुहुयाच्च घृताहुतीः ॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं लघ्वासीत वसेद्गृहे ॥
ततः कृत्वा इदं कर्म कर्तव्यं द्विजतर्पणम् ।
रजः स्त्रीषु निवर्तेत यावद्गर्भं न विन्दति ॥
असूता मृतपुत्रा वा यावत्कन्या प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा॥
यः सिद्धमन्त्रः सततं द्विजेन्द्राः! संपूज्य विष्णुं विधिवत्सुतीर्थैः।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षं छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम्॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्यं सविता मतः।
ऋषिर्हिरण्यरूपाख्यं त्रिष्टुप् छन्दः प्रकीर्तितम्॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः।
गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम्॥
अग्निर्मूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्यते।
विरूपाक्षो मुनिर्धीमान् छन्दो गायत्र्य मिष्यते॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम्॥
शुक्रन्त्वमिति होत्यत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥
शन्नो देवीतिमन्त्रेऽत्र शनिर्दैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुर्दैवत मुच्यते।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥

स्योना पृथिवीत्यत्र च्छन्दस्य देवता स्मृता ।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः ॥
आर्षं तत्सस्य चाप्युत त्रिष्टुप्छन्दः प्रकीर्तितम् ।
यस्मिन्नृचेति स्येत्यत्र यमोवै देवता परा ॥
ऋषिस्तु कुशलो नाम च्छन्दोऽनुष्टुप् स्मरेद्बुधः ।
ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत् ॥
मुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते ।
आयाते मितिच ह्यस्यां पितृगुह्यस्य दैवतम् ॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्यथो बुधैः ।
अग्निं दूतमितिह्यं स्यादग्निर्वै देवता स्मृता ॥
आर्षं मेधातिथिरत्र च्छन्दोगायत्र्यमेवं हि ।
अस्यस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत् ॥
मेधातिथिरिहाप्यर्षोऽनुष्टुप्छन्दस्य उच्यते ।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवतं क्षितिः ॥
ऋषिः शातातपः प्रोक्ता छन्दश्चानुष्टुप् कुर्वन्ति ।
पुरुषसूक्तस्य दैवत्यं पुरुषेच हितं बुधैः ॥
आर्षं नारायणस्येह छन्दस्यानुष्टुबित्यपि ।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवतं महत् ॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वमित्यत्रबुधैः सुरेन्द्रो देवता मता ॥
अत्रापि काश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्ण मित्यत्र इन्द्रो दैवत मुच्यते ॥
आर्षं साङ्ख्यस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापते इति ह्यत्र देवता च प्रजापतिः ॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः ।
आयं गौरिति स्यात्र देवता पूजने मता ॥
सर्पराजमुनिश्चात्र गायत्र्यं छन्द इष्यते ।
एष ब्रह्मा ऋत्विज इति ब्रह्मद्विषोऽधिदैवतम् ॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते ।
आत्मन्वन् इन्द्रद्दद्रुत् सुरेन्द्रं शर्मणोश्वरः ॥
वामदेवोह्यस्य आर्षं गायत्र्यच्छन्द इत्यपि ।
जातवेदस इत्यत्र जातवेदास्तु दैवतम् ॥
कश्यपस्यार्षमत्रापि छन्दोऽनुष्टुप् प्रकीर्तितम् ।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते ॥
आर्षञ्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि ।
नमः प्रजादैवत्यं मुनिप्रोक्तं प्रजापतिः ॥
गायत्र्यं छन्दसाश्वरं विनियोगो यथोचितम्
ईषो ऊर्जेति चात्यत्र अश्विनौ दैवते स्मरेत् ॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम् ।
मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते ॥
गौतमश्च मुनिर्विद्वन् ! छन्दसः प्रथमं मुने !।
दैवत्य मार्षं सच्छन्दसां यों मत्वाद्विजाग्राकु रुते विधान
वेदोक्तमर्थं मवतिश्च सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र ॥
यो लक्षहोमं त्वथ कोटिहोमं राजा विदध्यात्प्रतिवर्षमेक
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य तो
भवन्ति पुत्राः शुभसन्तति च समाश्चिरायुषो राजहिता भरि
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतु
इति श्रीवृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्या

# दशमोऽध्यायः।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया।
पराशरोदितं विप्रा! वक्ष्यमाणं निबोधत॥
प्रभुर्भूमा परो देवपूज्योऽसौ परदेवकः।
स विधाता च सर्वस्य रचिता शासितापि च॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः।
शीतांशुतीव्रभासश्च ब्रह्मादयो हि यो नृपः॥
नृपो वेधा नृपः शम्भुर्नृपोऽर्को विष्टरश्रवाः।
दाता हर्त्ता नृपः कर्त्ता नृणां कर्मानुसारतः॥
नाप्रक्ष्येद्यदि राजानं दण्डं नाप्याचरिष्यतः।
नामास्या समेष्यतिच नाभविष्यज्जगत्स्थितिः॥
नाशिष्यन् पुरोडाशाम्मनुष्यपितृदेवताः।
नाभविष्यत् स्वकाकानां भागधेयं हुतं हविः॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत्।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥
स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान्।
शास्य धर्मविदो दण्ड मधर्मकारिणश्च तान्॥
दण्डधृतो नरान् कुर्य्याद्धर्मज्ञानार्थसाधकान्।
समर्थानक्षपत्यादौ शूरान् स्वामिहितोद्यतान्॥
शुचीन् प्रज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकराश्विताम्।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः॥
अमात्यान्मर्म्मज्ञो दूतान्यथोदितपुरोहितान्।
प्राड्विवाकं समज्ञाख्या हितांश्च रक्षकानपि॥

शूरानथ शुचीन् प्राज्ञान्परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे ॥
सदायत्तं कुमाराणा मन्तःपूरुषलक्षणम्।
वृद्धानशुचिनो विप्रां स्त्रुचीननघान् भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम्॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विप्रान मात्मरक्षा च यत्नतः॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं गुडं पुंसवनं स्तृतम्।
यथोक्तकार्य्ये शाठ्ये च नित्यं कुर्य्यात् परीक्षणम्॥
कोशभाण्डरधादीनां हेतीनां वर्मणामपि।
कुर्य्याच्च दर्शनं नित्य मतन्द्रितो महीपतिः॥
अमात्यमन्त्रयोक्तृणां सम्मन्त्रं नित्यशोऽपि च।
वेदार्थश्च सदा होमशान्तिश्च वृद्धसेवनम्॥
यज्ञदानं तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम्॥
अर्चिवर्जितदेशे तु नीतिज्ञो मन्त्रहृद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः॥
रुदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाभियाचिने युक्तः पूज्यो नाकेऽप्यसौ नृपः॥
सदा साधुषु सम्मानं विपरीतेषु घातनम्।
दण्डं दण्ड्येषु कुर्वाणो राजेष्टफलमश्नुते॥
वृद्धान् साधून् द्विजान् मौलान् यो न सम्मानयेन्नृपः
पिण्डं कुर्व्वीत नाभीषां भूभृत् क्षिप्रं क्षयं व्रजेत॥
यस्तु सम्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येन्द्रयातोयैश्च सम्पन्नं परमण्डलम् ॥
क्षीणवाहनपुंस्कान्तु मत्वा तत्प्रविशेन्नृपः।
मासे सप्तसि यात्रार्थी क्षतपुष्यश्च पोषवान् ॥
विधिवद्द्यानकं कुर्य्यात् सहाडै रक्षयेद्बलम्।
यत्राचलसरोरक्षा दुश्चरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्निशि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न चरेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीककृतशब्दितम् ॥
उत्थापयेत् स्वसेनायाः स्वायत्ताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गरदानादि वह्निपातानमनेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यत्नादुक्तान् मतं सर्वं निशामयेत् ॥

अन्तर्भीरून् बहिः शूरान् साम्मिकान् ब्राह्मणोत्तमान्।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत्।
उत्सार्य्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्सर्वं सयवानि धनानि च।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा ॥
अपमृत्युमुपादाय भूमिसाधारणां पुनः।
गमयेद्वार्षिकान् मासानसौ च वसुधाधिपः ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम्।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः।
तद्वशं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दर्भसूच्योऽपि विद्धदुष्टश्रोपपातनम्।
न तापित युक्ते च युद्धमिच्छौ परस्मिन्निवत् ॥
स्वस्यस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित्।
ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु क्षपायां युद्धमुत्सृजेत्।
तस्मीरवासतोवापि पीडयेत्परसैन्यकम् ॥
व्यूहैर्व्यूहयशोभैर्वा रक्षां कृत्वापि चात्मनः।
सैन्यकांस्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतौ नृपः।
अन्विच्छन् जयलक्ष्मीं तु नीतिज्ञः पृथिवीपतिः ॥
प्रपायेनापि प्रत्या च शस्त्रास्त्रोऽपि च मानवः।
मुख्यैरपि न युञ्जेत युद्धं तत्र विपत्तये ॥

हीनं परबलं मत्वा निकृत्याक्रमणादरम् ।
समस्तबलसंयुक्तः स्वयमुत्थाय योधयेत् ॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम् ।
पराङ्मुखञ्च प्रहतं न तवास्मीति वादिनम् ॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत् ।
हन्यान्नरकं याति भ्रूणहत्यासमेनसा ॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते ।
तत्पदानीष्टितुल्यानि भूत्यर्थमेकचेतसः ॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तबिन्दवः ।
सोमपानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत् ॥
युद्धस्ते भूभृतो येच भूम्यर्थं मेकचेतसः ।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम् ॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम् ।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा ॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः ।
तद्देशव्यवहारेण यथावत्परिपालयेत् ॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान् ।
अर्चयेद्विधिवद्विद्वान् सतान् सम्मानयेदपि ॥
मातुलः श्वशुरो बन्धु रम्यो वापिच यो जितः ।
अदण्ड्यः कोऽपि नो राजा राजनीतिविदो विदुः ॥
सुसहायमशपादं शूरं प्रजानुरागदम् ।
सोत्साहं विजिगीषुञ्च भूभृत् क्षिप्रं निवेदयेत् ॥
मत्वाचार्यवतः सर्वान् नियुक्तार्थनियुग्भवेत् ।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च विघ्नानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोशवत् ।
आदाय रक्ष चात्मान ततस्तत्र च तत् क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्थस्यापि यद्भवेत् ।
पापखण्डगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपापखण्डगणका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्तार्चिश्वाश्वगोमांसाम् यस्य दष्टत्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीड़येत् प्रजाः ॥
स्तोकं स्तोकन्तु फलकं मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ।
तदेवं हृदि सन्ध्यायन् निस्तन्द्रो नृपो भवेत् ॥
दैवपुरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः ॥

नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽत्र चयाति पक्षी।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धि र्नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणम्।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत्र दृष्टा पुरुषार्थसिद्धिः ।

यस्तूद्यमी क्रियतएवच यः श्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमप्यमात्रम् ॥

ुत्राणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
र्वपतित्वञ्च गुरुरता च सर्वं हि मन्ये चयमेति दैवात् ॥
वां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
षां प्रभुत्व बहुजीविताच एको हि दैवो बलवानतोऽत्र ॥
स्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
ोगात्तु तत् विप्र ! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्
ासात्तु गर्भस्य न सम्भवोऽस्ति कामात्तु शुक्रं नतु वीर्य्यहीनम् ।
भत गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
ता विधाता निजकर्मयोगाद्द विधेयभीष्टं त्वनुभावभाग्यम् ।
वारुणानां नच दैत्यकानां स ह्येव कर्त्ता तु मनूद्भवानाम् ॥
ान्मयोनाऽपि रुद्रसमर्चणां दैवाद्धिमांशोः क्षयरोगता च ।
ात्पयोधौ लवणोदकत्वं दैवाद्धवेच्चिन्ततरा च वृष्टिः ॥
ाप्यमुख्यं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो गुरुकारम् ।
पयेत्कर्मकरो गुरुकाराद्दुद्दीपितं श्रीरिवचै तनोति ।
। केचिच्च हठेन केचित् केचिन् गुरुकारेण नरस्य चार्थः ।
ान्ति यत्नेन विधीयमाना स्तेषां प्रधानं नरकारमाहुः ॥
मप्रधानं त्वयदुर्गकोषान् दण्डञ्च मित्राणिच नीतियत्नाः ।
नि राज्यस्य वदन्ति सप्त सप्ताङ्गयुक्तो नृपतिर्धराभुक् ॥
ासहृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै ।
ञ्च मत्वाऽर्जितवित्तसत्त्वात् हीनार्थ पुंसाय दमन्ति हीनम् ।
यतो ये जमनं जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
ोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
: महाम्मध्यकमध्यमस्तु मानन्तु तस्य त्रसरेणुकादि ॥
ाति साहसाणपामहान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादस्य हरस्य दण्डः पात्यो नृपेणेति वदन्ति सद्यः॥
पाण्यादिपाच्छेदनमारणञ्च निर्वासनं राष्ट्रत एव सद्यः।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्ड्येषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च।
स चैवकीर्तिं वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्वरतांश्च लोकान्
आनीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणैः प्रशस्यम्।
अन्यच्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥
सर्वं च भूयस्त्विह रूपकञ्च तत्तथ्यमानं शृणुत द्विजेन्द्राः॥
यदा जिगीषुर्धृतशस्त्रपाणिः स्वयं समालम्ब्य स विडसैन्यः॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदा सहर्यक्ष इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेयं स सहस्रकीर्तिः॥
यदा तदैनं नृपतीति विज्ञास्तनूनपात्तं प्रवदन्ति भूपम्॥
धर्मासनस्थश्रुतिशास्त्रदृष्ट्या शुभाशुभाचारविचारदक्षात्॥
धर्म्येषु दानं त्वपकृत्सु दण्डं यदावनीशः सच धर्मराजः।
धनप्रदानेन करोति हृष्टा भूभृत्तदासान्द्रविणेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदासेष शुभाय शास्ते।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त समस्तवश्याः
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः परुषं नृपस्य।
यस्तस्य तेजोऽप्यवमन्यमान्यः सद्यः स पञ्चत्व मुपैति पापात्

योऽङ्काय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न बिभर्ति राज्ञः
समस्तदेवांशभवोऽपि यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात्॥
इति श्रीहृत्याराशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यशौचाग्निकर्मकृत्॥
वन्यैर्मुन्यशनैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीवरवासा वै श्मश्रुलोमजटाधरः।
पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाप्यात्मचिन्तकः॥
सत्यस्तथान्तको नित्य दानशीलः सदा द्विजः।
किञ्चिद्दिष्टं समास्थाय स वृत्त्या वर्तयेत्सदा॥
एकाह्निकन्तु कुर्वीत मासैकस्यार्थसञ्चयम्।
षाण्मासिकञ्चाब्दिकञ्च यथार्थं च वने वसेत्।
त्यक्त्वा तदाश्विने मासि पश्च स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

